# चन्दामामा पदं निदधाति ६० तमे वत्सरे

१९४७ – तेलुगु, तमिळ् च
१९४८ – कन्नड
१९४९ – हिन्दी

१९५२ – मलयाळं, मराठी च
१९५४ – गुजराती
१९५५ – इंग्लीष्

१९५६ – ओरिया सिन्धी च
१९७२ – बङ्गली
१९७५ – गुरुमुखी
१९७६ – असामी

१९७८ – सिंहली
१९८४ – संस्कृतम्
२००३ – इंग्लीष्-तमिळुमिश्रितावृत्तिः सिङ्गपुरीयाणां कृते । इंग्लीष्सहिताः तेलुगु-तमिळु-हिन्दी-गुजराती-आवृत्तयः दक्षिणामेरिकीयाणां कृते ।

२००४ – सन्थाली-वनवासिनां भाषया प्रकाशिता प्रथमा बालपत्रिका ।



२००३ तमे वर्षे Junior Chandamama प्रकाशनम् आरब्धम् । ब्रेल्लिप्या चन्दामामाप्रकाशनं कृतं १९८१ तः १९९७ पर्यन्तम् । २००५ तमे वर्षे तस्याः आवृत्तेः पुनरारम्भः कृतः । काश्चन आवृत्तयः लघुविघ्नकारणतः त्रुटिं गताः । तथापि प्रकाशनकार्यम् अक्षुण्णतया अनुवर्तते । एतत् कार्यं किं जागतिक-सिद्धित्वेन परिगणयितुम् अर्हं न ?

चन्दामामा – प्रकाश्यते बह्वीभिः भाषाभिः, परम्परा तु समाना






## बालविशेषाङ्कः (नवें - ०६ सञ्चिका)

*प्रकाशितः भविष्यति इति विषयः भवद्भिः एप्रिल् -०६ सञ्चिकायां दृष्टः स्यात् एव ।*

## पारितोषिकाणि

कथायै - रू. ५००/- प्रकाशितायै कथायै

चित्राय - प्रथमं पारितोषिकं रू. ५००/-, द्वितीयं पारितोषिकं रू. ३००/-, त्रीणि प्रोत्साहनपारितोषिकाणि रू.२००/- मितानि ।

- भवतां कथा तासु त्रयोदशसु भाषासु कयाचित् रचिता स्यात्, याभिः च प्रकाश्यते चन्दमामा ।
- पूर्वोक्तभाषासम्बद्धाः घटनाः अपलम्ब्य रचितानि भवेयुः चित्राणि ।
- अधः दत्तेन विवरणपत्रेण सहैव कथा चित्रं वा प्रेष्यताम् । विवरणपत्रस्य छायाप्रतिकृतिः नानुमन्यते ।

---

अहम् अधोनिर्दिष्टं प्रेषयन् / प्रेषयन्ती अस्मि -

कथा - नाम १. ____________

२. ____________

चित्रम् - विषयः १. ____________

२. ____________

नाम ____________

जन्मदिनाङ्कः ____________ कक्ष्या ____________ विद्यालयः ____________

निवाससङ्केतः ____________

____________ Pin code ____________

यदेतत् प्रेष्यमाणम् अस्ति तत् मम पुत्रेण/पुत्र्या स्वप्रतिभया रचितम् इति अहं प्रमाणीकरोमि ।

पोषकः भागग्राहकः/भागग्राहिका









चन्दमामा सम्पुटः - २३ जुलै - २००६ सञ्चिका - ०७



## एतस्य अङ्कस्य विशेषाः













## अन्तरङ्गम्



ग्राहकशुल्कम् -
अमेरिका-केनडादेशयोः कृते
प्रतिकृतिमूल्यम् - $२
वार्षिकं शुल्कं - $२०
भवदीयं धनं 'Chandamama India Limited' नाम्ना प्रेष्यताम् -

**Subscription Division**
**CHANDAMAMA INDIA LIMITED**
No. 82, Defence Officers Colony,
Ekkatuthangal, **CHENNAI - 600 097**
E.mail : subscription@chandamama.org

### चन्दमामाप्रश्नावली चतुर्थी (मे - २००६)

संस्कृतचन्दामामावाचकेषु केनापि समुचितम् उत्तरं न प्रेषितम् इत्यतः वयं कस्मैचिदपि पारितोषिकं यच्छन्तः न स्मः । वाचकानां ज्ञानाय चतुर्थ्याः प्रश्नावल्याः उत्तरम् ३१ तमे पृष्ठे प्रकाशयन्तः स्मः । सर्वे वाचकाः एतस्यां प्रश्नावलीस्पर्धायां सोत्साहं भागं वहेयुः इति अस्माकम् अभ्यर्थना ।



*संस्थापकौ -*
चक्रपाणिः, बि. नागिरेड्डिः च

# अपूर्वा सिद्धिः एषा

भारतीयपरम्परायां षष्टेः संवत्सराणां चक्रं भवति । एकस्य संवत्सरचक्रस्य समाप्तेः अनन्तरं नूतनस्य चक्रस्य आरम्भः । चन्दमामाप्रकाशनं १९४७ तमे वर्षे जुलैमासे प्रारब्धम् । इदानीं चन्दमामा षष्टितमे वत्सरे पदं निदधती अस्ति । पत्रिकाजीवने एषा सिद्धिः अपूर्वा एव । भारते कापि बालपत्रिका एतावद्दीर्घं जीवनं न कृतवती प्रायः । अतः चन्दमामायाः एषा सिद्धिः निश्चयेनास्ति अपूर्वा ।

एतस्याः सिद्धेः प्रमुखं कारणम् - अनुभविनां बहूनां वाचकानां सहकारः, तत्त्वविषये अस्माभिः दर्शिता अविचला श्रद्धा, भारतीयाः बालाः अस्मत्पूर्वजानां परम्परां यथा जानीयुः तथा कृत्वा, तेषु मानवीयानि मौल्यानि जागरय्य ते देशस्य सत्प्रजाः यथा भवेयुः तथा प्रयासः इत्यादयः ।

एतदवसरे वयम् एतस्याः पत्रिकायाः संस्थापकयोः बि.नागिरेड्डी-चक्रपाण्योः कृते कृतज्ञतापूर्वकं श्रद्धाञ्जलिम् अर्पयामः, यौ च स्वतन्त्रभारतस्य बालानां कृते उत्कृष्टस्य उपायनस्य दानाय आधारशिलां स्थापितवन्तौ । ताभ्यां यः गुणस्तरः प्रतिष्ठापितः तस्य अनुसरणे अनन्तरीयैः निरन्तरः प्रयत्नः कृतः एव ।

एतस्मिन् कर्मणि अस्माकं वाचकानां सहकारः तु निश्चयेनास्ति अविस्मरणीयः, ये च आ अधिकाष्टवर्षेभ्यः, आ ऊनाशीतिवर्षेभ्यः च सन्ति । बालानां पालकाः, अध्यापकाः, विज्ञापिकादातारः, अभिकर्तारः, वितारकाः इत्यादयः सर्वे अपि अत्र अभिनन्दनार्हाः । ये सहकारदानेन नितराम् उपकुर्वन्तः सन्ति तेभ्यः सर्वेभ्यः नैके धन्यवादाः समर्प्यन्ते ।

*सम्पादकः* - विश्वम्

Visit us at : http://www.chandamama.org



# वाचकानां पुटोऽयम्

## बालसेवकः इन्दोरतः लिखति -

आ सप्तमात् वर्षात् अहं चन्दमामां पठामि । मम नगरे इन्दोरे चन्दमामायाः नियतवाचकाः बहवः सन्ति । गतानां २८ वर्षाणां सर्वाः सञ्चिकाः अस्मत्समीपे सन्ति । एषः अस्माकम् अभिमानस्य विषयः । यद्यपि अन्याः अपि काश्चन बालपत्रिकाः सन्ति, तथापि चन्दमामा तु स्ववैशिष्ट्येन ताः सर्वाः अतिशेते । पारम्परिकजीवनमूल्यानां प्रतिपादिकाः अत्रत्याः कथाः वाचकानां मनस्सु सुदृढं संस्कारं जनयन्ति इत्येतत् एव अत्र कारणम् । चन्दमामायाः वैशिष्ट्यानि तावत् - १. चन्दमामा वेदपुराणोपनिषदादीनां कथाः बाहुल्येन प्रकाशयति । २. चन्दमामायां नेतृत्ववर्धिकाः साहसमय्यः च इतिहास-जनश्रुति-जानपदकथाः भवन्ति बहुधा । ३. शङ्कर-चित्रादीनाम् उत्तमानि चित्राणि अत्र कथां विभूषयन्ति । मया चन्दमामा-वैशिष्ट्यानां विषये बहु लेखितुं शक्येत । किन्तु प्रभूतं लिख्येत चेदपि तत् अपर्याप्तम् एव भवेत् ।

## नीलमणिभाटिया नवदेहलीतः

चन्दमामा प्राचीनार्वाचीनयोः समन्वये असिधाराव्रतमेव आचरन्ती स्वकर्तव्यं सम्यक् निर्वहति इति वक्तुं शक्यते । बालानां हितं विविधैः प्रकारैः साधयन्ती चन्दमामा उत्तमम् उपायनम् अस्ति । चन्दमामा चिरं जीयात् ध्रुवनक्षत्रम् इव ।

## मिलिन्दसामन्तः सिन्धुदुर्गतः

चन्दमामायाः पठनं नितराम् आसक्तिदायकम् । अत्रत्यानि चित्राणि कथायाः वैशिष्ट्यं सौन्दर्यं च वर्धयन्ति आनन्दं जनयन्ति । अद्य ग्रामजीवनं महता वेगेन परिवर्तमानम् अस्ति । तथापि चन्दमामायाः चित्राणि तु प्राचीनपरम्पराम् अत्यजन्ति योग्यां जीवनशैलीं परिचाययन्ति । मौल्याधारिताः कथाः, वेतालकथाः, सामान्यज्ञानविषयाः च चन्दमामायाः वैशिष्ट्यं वर्धयन्ति । निर्मलाय मनोरञ्जनाय, ज्ञानस्य अभिवर्धनाय च प्रयासः चन्दमामायाः उत्कृष्टतां कल्पयति ।

## उडुपीस्थः कार्त्तिकभूषणः लिखति -

अहं भवतां चन्दमामायाः आराधकः । चन्दमामा अत्युत्तमा पत्रिका । अतः एतस्याः सर्वाः अपि सञ्चिकाः नियततया पठामि अहम् ।



# विचित्रः स्वार्थः

विदुरेश्वरनामके ग्रामे मालतीनामिका काचन दासी निवसति स्म । कस्याश्चित् प्रसववेदना आरब्धा चेत् सा तत्र तिष्ठेत् एव । यतः ग्रामीणानाम् एषः विश्वासः आसीत् यत् प्रसवसमये यदि सा भवति तर्हि मात्रपत्ययोः कापि हानिः न भविष्यति इति ।

एकदा मालती पार्श्वग्रामे कस्याश्चन प्रसव-सम्बन्धि कार्यं समाप्य प्रत्यागच्छन्ती आसीत् । तदा मार्गे कुत्रचित् एकस्य वृक्षस्य अधः काञ्चन शिबिकां परितः बह्व्यः महिलाः सम्मिलिताः तया दृष्टाः । शिबिकातः किञ्चिद्दूरे शिबिकावाहकाः स्थिताः आसन् ।

तासु महिलासु काचन मालतीं दृष्ट्वा उक्तवती – ''मालति ! भूस्वामिनः पुत्री ग्रामे स्थितं विदुराश्रमं द्रष्टुम् आगता । गर्भिण्याः तस्याः सप्त मासाः सम्पन्नाः । किन्तु तस्याः परिस्थितिः दृष्टा चेत् भासते यत् सा इदानीमेव प्रसूयेत इति'' इति ।

मालती शिबिकायां स्थितायाः भूस्वामिनः स्नुषायाः परीक्षां कृत्वा तत्रत्यान् उक्तवती – ''सत्यं, प्रसववेदना आरब्धा अस्ति एव । कस्मिंश्चिदपि क्षणे प्रसवः भवेत् । शीघ्रं मम गृहम् आनयन्तु एताम्'' इति ।

ततः शिबिकावाहकानां साहाय्येन तां स्वगृहं नीतवती सा । केषुचिदेव क्षणेषु भूस्वामिनः स्नुषा पुत्राय जन्म दत्तवती ।

एतां वार्तां श्रुत्वा झटित्येव भूस्वामी, तस्य पुत्रः, परिवारजनाश्च मालतीगृहम् आगताः ।

तदा मालती भूस्वामिनम् उक्तवती – ''स्वामिन् ! भयस्य कारणं नास्ति । माता पुत्रश्च कुशलिनौ । किन्तु भवतां गृहे यादृशम् आनुकूल्यं लभ्येत तादृशम् आनुकूल्यम् अत्र नास्ति'' इति ।

तदा भूस्वामी प्रसन्नवदनः सन् मालतीम्



उक्तवान् - ''अहं भवत्याः कुशलतां बहुधा श्रुतवान् आसम् । अद्य प्रत्यक्षरूपेण सा मया दृष्टा अपि । अहं भवत्याः गृहे आवश्यकानाम् आनुकूल्यानां व्यवस्थां करिष्यामि । अचिरात् एव राजवैद्यः आगमिष्यति ! सः मम स्नुषायाः पौत्रस्य च योगक्षेमं परिशीलयिष्यति'' इति ।

तदारभ्य मालत्याः जीवनं परिवृत्तम् । तस्याः गृहे यानि आनुकूलल्यानि अपेक्षितानि तानि सर्वाणि सिद्धानि । सप्ताहाभ्यन्तरे भूस्वामी मालत्याः पतिम् आनाय्य तस्मै विशालं क्षेत्रम् उपहारीकृतवान् ।

मालत्याः गृहात् प्रस्थिता भूस्वामिनः स्नुषा प्रस्थानसमये - ''भवत्या अहं मम शिशुश्च रक्षितौ । यदि भवती पुत्र्यै जन्म दद्यात् तर्हि अहं तां मम स्नुषात्वेन स्वीकरिष्यामि'' इति उक्तवती ।

तदा मालती अञ्जलिं बद्ध्वा उक्तवती - ''अहं मम वृत्त्यनुगुणम् आचरितवती । भू-स्वामी तदर्थम् अनेकानि आनुकूल्यानि अत्र कृतवान् अपि । भवत्याः नाम अहं कदापि न विस्मरिष्यामि । अन्यत् किमपि अहं न इच्छामि'' इति ।

गच्छता कालेन मालत्याः जीवनस्तरः उत्तमः अभवत् । तया गृहं निर्मितम् । क्षेत्रं तु आसीदेव । अतः तस्याः जीवनं सुखमयं जातम् । चतुर्णां वर्षाणाम् अनन्तरं मालत्या एका पुत्री प्राप्ता । तस्याः नाम रागिणी इति ।

एवमेव पञ्चदश वर्षाणि अतीतानि । भू-स्वामी इदानीं वृद्धः सञ्जातः अस्ति । तस्य पुत्रः एव भूस्वामिपदं निर्वहति । पौत्रः कल्याणवर्मा विंशतिवर्षीयः तरुणः ।

मालत्याः पुत्री रागिणी महासुन्दरी इति सर्वे प्रशंसन्ति स्म । तस्मिन् वर्षे विदुरेश्वरस्य ब्रह्मोत्सवावसरे भूस्वामिनः गृहसदस्याः मालतीं तस्याः पुत्रीं च अपश्यन् । कल्याण-वर्मणः माता मालत्या सह महत्या प्रीत्या वार्तालापं कृतवती । रागिणीं दृष्ट्वा तया पूर्वम् उक्तं वाक्यं स्मृतम् ।

कल्याणवर्मणः माता मालतीम् अवदत् - ''भवत्याः पुत्री रूपवती अस्ति । अहं यदि निर्णयस्वीकारे स्वतन्त्रा स्यां तर्हि भवत्याः पुत्रीं मम स्नुषां कुर्याम् एव'' इति । तस्याः वचनं श्रुत्वा मालती हसन्ती मौनेन अतिष्ठत् ।

कल्याणवर्मा मातुः वचनं श्रुतवान् । मातुः संकाशात् सः विषयं सर्वं ज्ञातवान् । कदाचित् सः एकाकिनीं रागिणीं दृष्ट्वा उक्तवान् - ''अहं भवतीं परिणेतुम् इच्छामि । मम मातुः आशां

पूरयितुम् इच्छामि अहम्'' इति ।

किन्तु रागिणी निष्ठुरस्वरेण उक्तवती - ''भवान् भूस्वामिवंशे उत्पन्नः । कस्याश्चित् दास्याः पुत्र्या सह भवतः परिणयं गृहजनाः न अङ्गीकरिष्यन्ति । समाजः अपि न अङ्गीकुर्यात् । अतः एतं विवाहप्रस्तावं भवान् विस्मरतु'' इति ।

कल्याणवर्मा किमपि अनुक्त्वा ततः निर्गतः । वृद्धः भूस्वामी एतं विषयं ज्ञातवान् । सः रागिण्याः जातकम् आनाय्य ज्योतिषिकैः परिशीलनं कारितवान् । तदा ज्ञातं यत् रागिण्याः जातके राज्ञीयोगः, राजमातृयोगश्च अस्ति इति । एतत् ज्ञात्वा भूस्वामी दिग्भ्रान्तः । इतः विमुक्तिं प्राप्तुम् अस्यां परिस्थितौ कल्याणवर्मणः विवाहकरणम् एकः एव मार्गः इति मत्वा सः योग्यायाः वध्वाः अन्वेषणे त्वरां प्रदर्शितवान् ।

किन्तु तस्मिन्नेव समये काचन दुर्घटना संवृत्ता ।

कल्याणवर्मा कदाचित् कार्यार्थम् अश्वम् आरुह्य राजधानीतः प्रस्थितः । तदा अकस्मात् आकाशः मेघैः आवृतः । विद्युतः स्फुरिताः । महती वृष्टिः आरब्धा । कल्याणवर्मणः समीपे एव अशनिः एकः पतितः । तदा कल्याणवर्मा अश्वात् पतितः सन् मूर्च्छां गतः । समीपस्थाः तं स्वगृहं प्रति नीतवन्तः । किन्तु अशनेः प्रभावेण सः दृष्टिहीनः अभवत् । वैद्याः तं सम्यक् परिशील्य - ''एतादृशी एव अनिरीक्षिता घटना यदि पुनः भवेत् तर्हि एव एतेन पुनः दृष्टिः प्राप्येत'' इति उक्तवन्तः । अनेन भूस्वामिनः गृहस्य जनाः सर्वे शोकसागरे पतिताः ।



परेद्यवि एव पितामहः कल्याणवर्माणम् आहूय उक्तवान् - ''भवतः मात्रा मालतीम् उद्दिश्य यत् उक्तं तथैव इदानीं सम्पद्यमानम् अस्ति सर्वम् अपि । भवतः विवाहः दासीपुत्र्या सहैव भवेत् इति नियतिः स्यात् । भवता अपि एषः सम्बन्धः एव इष्टः इति अहं जानामि । भवतः जीवने अस्यां परिस्थितौ तादृशी पत्नी अपेक्ष्यते, यया च भवतः सर्वाणि कार्याणि प्रीत्या क्रियेरन् । अतः भवान् रागिणीं परिणेतुम् इच्छति चेत् वयं तत्र आपत्तिं न वदेम'' इति ।

एतत् श्रुत्वा कल्याणवर्मा उक्तवान् - ''भवतः यथा इच्छा तथैव भवतु'' इति ।

मालत्या एषा वार्ता प्राप्ता । सा पुत्रीं रागिणीम् उक्तवती - ''पुत्रि ! कल्याणवर्मा



आढ्यकुलीयः स्यात् नाम, तथापि सः अन्धः इदानीम् । कस्मैचित् अन्धाय भवतीं दातुम् अहं न इच्छामि । अन्धस्य पत्नीत्वेन भवतीम् ऊहितुमपि अहं न शक्नोमि । अतः एतं विवाहप्रस्तावम् अहं तिरस्करोमि'' इति ।

मातुः वचनानि श्रुत्वा रागिणी उक्तवती – ''वयं निरालम्बाः । भूस्वामिनः प्रस्तावस्य तिरस्करणं नाम आपदः सम्मुखीकरणमेव । अहम् एतं विवाहप्रस्तावं सन्तोषेण एव अङ्गीकरोमि'' इति ।

रागिण्याः अङ्गीकारं ज्ञात्वा सपदि एव भूस्वामिनः परिवारः मालतीगृहम् आगतः । विवाहसम्बन्धीनि वचनानि मालतीं वक्तुं कल्याणवर्मणः माता प्रकोष्ठम् आगता । तत्रत्यं दृश्यं ताम् आश्चर्यचकिताम् अकरोत् । यतः रागिणी वस्त्रपट्टिकया स्वस्य नेत्रे बद्धवती तया दृष्टा तत्र । यावत् सा किमपि वक्तुम् उद्युक्ता तावता निर्व्यग्रा सती मालती उक्तवती – ''यं लोकं मम पतिः द्रष्टुं न शक्नोति तादृशं लोकं द्रष्टुम् अहमपि न इच्छामि । अहं भूस्वामिनः गृहस्य स्नुषा भविष्यामि । अतः अहं गान्धार्याः आदर्शं पालयितुम् इच्छामि'' इति ।

तत्र आगताः सर्वेऽपि रागिण्याः व्यवहारं प्राशंसन् । ते अचिन्तयन् यत् रागिणी एव भूस्वामिनः वंशाय योग्या इति । किन्तु वृद्धः भूस्वामी रागिण्याः व्यवहारस्य अर्थम् अवगतवान् आसीत् ।

सः आशीर्वादव्याजेन रागिणीम् आहूय एकान्ते उक्तवान् – ''रागिणि ! भवती बुद्धिमती अस्ति । भवती सामान्ये गृहे उत्पन्ना । अतः अहं भवतीम् अन्धस्य कल्याणवर्मणः

पत्नीरूपां सेविकां कर्तुम् इष्टवान् । किन्तु भवती नेत्रे वस्त्रपट्टेन बद्ध्वा सर्वेषां मनस्सु पतिव्रतास्थानं प्राप्तवती । मया ज्ञायते यत् भवती अपि पत्युः समाना सती गृहे स्थानं प्राप्तुम् इष्टवती इति । भवतीम् अहं स्वार्थपराम् एव भावयामि । तथापि लोकः तु भवतीं पतिव्रताम् एव मन्यते । अहमपि भवतीम् सादरमेव स्वागतीकरोमि'' इति ।

तदा रागिणी उक्तवती – ''भविष्यति काले कस्य स्वार्थभावना अस्ति इति ज्ञायते एव । भवान् मां स्नुषात्वेन अङ्गीकृतवान् इत्येषः एव मम सन्तोषदायकः विषयः'' इति ।

रागिणीकल्याणवर्मणोः विवाहः सम्पन्नः । मासद्वयानन्तरम् एकदा महती वृष्टिः जाता । वृष्ट्या अशनिपातोऽपि अभवत् । तस्मिन् समये कल्याणवर्मा भवनस्य उपरिभागे आसने उपविष्टः आसीत् । आम्रवृक्षस्य पार्श्वे एव अशनिः पतितः । कल्याणवर्मा मूर्च्छितश्च जातः ।

एतं विषयं ज्ञात्वा गृहसदस्याः सर्वे तत्र धावन्तः आगताः । नेत्रे उद्घाटितवान् कल्याणवर्मा पुरतः स्थितां रागिणीं साश्चर्यं पश्यन् – ''अहो, अहं द्रष्टुं समर्थः अभवम् । एकेन अशनिना मम दृष्टिः अपहृता । अन्येन पुनः प्रदत्ता । रागिणि, भवती अद्य पूर्वतः अपि अधिकसुन्दरी इव भासते । एतादृशं सन्तोषम् अहं जीवने कदापि न अनुभूतवान्'' इति सावेगम् उक्तवान् ।

तस्य वचनं श्रुत्वा मृदु हसन्ती रागिणी अवदत् – ''अहं सुन्दरी उत न इति तु अन्यः एव विषयः । किन्तु भवतः हृदयसौन्दर्यं तु अत्यपूर्वम् । प्रथमवारं मम दर्शनमात्रेण एव मयि भवतः प्रीतिः उत्पन्ना । मां परिणेतुं भवता यः प्रयासः वोढव्यः आपतितः सः नितरां श्लाघ्यः । तदर्थम् अहं सदापि भवतः विषये अधमर्णा भवामि'' इति ।

कल्याणवर्मा महत्या प्रीत्या रागिणीम् आलिङ्गितवान् । सर्वे चिन्तितवन्तः यत् रागिण्याः पातिव्रत्यमेव कल्याणवर्मणः दृष्टि-प्राप्तेः कारणम् इति ।

'रागिणी श्रेष्ठगुणान्विता उत्तमा स्त्री । तस्याः आगमनेन एव भूस्वामिनः वंशः इतोऽपि माननीयः अभवत्' इति जनाः सर्वे अवदन् ।



# शुनकस्य मित्रम्

रामेशकामेशौ प्रतिवेशिनौ । ग्रामे रामेशस्य विशेषगौरवम् आसीत् । यतः तस्य वचनेषु काचित् विलक्षणा शक्तिरस्ति इति जनाः भावयन्ति स्म । कामेशोऽपि रामेशः इव प्रसिद्धिं प्राप्तुम् इच्छन् तथैव वक्तुं प्रयतते स्म । किन्तु तदीयः सर्वः अपि प्रयासः विफलः अभवत् । सर्वेषाम् उपहासपात्रता प्राप्ता तेन ।

एकदा कामेशस्य गृहस्य पुरतः ग्रामीणाः केचन उपविश्य वार्तालापं कुर्वन्तः आसन् । तेषु रामेशोऽपि अन्यतमः । तदा मार्गे गच्छन्तम् एकं शुनकं दृष्टवान् कामेशः । सः शुनकः गृहद्वारपर्यन्तम् आगत्य तत्रैव स्थितः । शुनकं पश्यन् कामेशः उक्तवान् - ''रामेश, कोऽपि भवतः सुहृत् आगतः इति भासते'' इति ।

एतत् श्रुत्वा तत्रत्याः सर्वे अहसन् । रामेशः उत्थाय द्वारसमीपं गतः । शुनकः भषन् ततः निर्गतः ।

''कः सः ? किमर्थम् आक्रोशन् सः प्रतिनिवृत्तः ?'' इति पृष्टवान् कामेशः ।

''सः कः इति तु अहं न जानामि । परं सः भवता एव मेलितुम् आगतः आसीत् । भवतः स्थाने अहं यदा गतः तदा सः आक्रोशन् गतः'' इति रामेशः उक्तवान् ।

एतत् श्रुत्वा तत्र स्थिताः सर्वेऽपि उच्चैः अहसन् । कामेशस्य मुखं तु लज्जया विवर्णम् जातम् आसीत् ।






# भयङ्करः खातः

## ९

*[राजगुरुणा सह आगताः सैनिकाः गुहायां सर्वत्र ब्रह्मदण्डिमान्त्रिकम् अन्विष्टवन्तः । अन्ते तैः कालभैरवमूर्तेः उदरभागे कश्चन गुप्तः मार्गः दृष्टः । तेन मार्गेण गत्वा अन्विष्य मान्त्रिकं कुत्रापि अप्राप्य ते राजगुरोः सूचनां पालयन्तः गुहायाः द्वारे काष्ठानि शुष्कपर्णानि च सङ्गृह्य राशीकृतवन्तः । ततः तदुपरि तैलं पातयित्वा अग्निं प्रवर्तितवन्तः ते । तदनन्तरम् ...]*

तैलेन आर्द्राणि काष्ठानि पर्णानि च अग्निस्पर्शात् ज्वालाम् उदपादयन् । अचिरात् एव गुहायां सर्वत्र धूमः प्रसृतः । सेनापतिः, राजगुरुः, सैनिकाश्च गुहातः बहिः आगताः ।

''गुरुवर्य ! मान्त्रिकः एतस्यां गुहायाम् एव अस्ति इति भवता उक्तम् । धूमकारणतः श्वासोच्छ्वासं कर्तुम् अशक्नुवन् सः तत्रैव मरणं प्राप्नुयात्'' इति तम् अवदत् सेनापतिः ।

राजगुरुः धूमप्रसारं पश्यन् अवदत् – ''तस्य मरणं तथा भवितुं नार्हति । गुहातः निर्गमनाय बहवः मार्गाः स्युः एव । ते सर्वे तेन ज्ञाताः स्युः । अतः तेषु केनचित् मार्गेण सः पलायनं कुर्यात् एव । तस्मात् पर्वते सर्वत्र सैनिकाः जागरूकतया तिष्ठेयुः । यदि सः मान्त्रिकः दृश्येत तर्हि अविलम्बेन बन्द्धव्यः'' इति ।

राजगुरुः एवं यदा वदन् आसीत् तदा मान्त्रिकः चिह्नाङ्कितसिंहस्य गुहायाः पृष्ठतः




स्थित्वा शिष्यौ आह्वयन् आसीत् । मन्त्रदण्डेन शिला प्रहृता तेन । किन्तु ततः कोऽपि परिणामः न लक्षितः । निराशतां प्राप्तवान् सः पुनः पुनः शिष्यौ आह्वयन् स्थितवान् उच्चस्वरेण ।

तस्य कर्णौ तीक्ष्णौ आस्ताम् । अतः जयमल्लकेशवयोः सम्भाषणं तेन श्रुतम् एव । सः अवगतवान् यत् तौ मम ध्वनिं श्रुत्वा अपि गुहायाः अन्तः मम प्रवेशं निवारयन्तौ स्तः इति । जयमल्लः गुरुद्रोहम् आचरन् माम् अपायगर्ते पातयन् अस्ति इति अचिन्तयत् सः ।

'अयं दुष्टः शिष्यः मां ब्रह्मपुरसैनिकाधीनं कृत्वा भयङ्करखातस्थम् अपारम् ऐश्वर्यम् अमूल्यं सम्पदं च वशीकर्तुम् इच्छति' इति चिन्तयित्वा सः उच्चस्वरेण अवदत् – ''अये विश्वासघातिन् ! तेन मेषपालपुत्रेण सह भवान् गुहायाम् अस्ति इति मया न ज्ञायते इति भवान् चिन्तितवान् स्यात् । मम सामर्थ्यं भवता किं विस्मृतम् ? अचिरात् एव गुहायाः द्वारम् उद्घाट्यताम् । अन्यथा एषोऽहं भवन्तौ भस्मसात्करिष्यामि मन्त्रशक्तिसाहाय्येन'' इति ।

तस्य एतत् कथनं श्रुत्वा जयमल्लः केशवः च क्षणकालं भीतौ । जयमल्लः आत्मनि धैर्यं प्रपूर्य अवदत् – ''केशव ! अलं भीत्या । एषः आवां किमपि कर्तुं न अर्हति । ब्रह्मपुर-सैनिकैः सह आगतः जनः एतस्य मन्त्रशक्तिम् अपहृतवान् अस्ति । अतः एतदीया मन्त्र-शक्तिः आवयोः केशं कम्पयितुम् अपि नार्हति । तथापि मान्त्रिकतः अपायः नास्ति इति तु नास्ति । सैनिकैः गृहीतः सः प्रतीकार-भावनया व्यवहरन् आवयोः अत्र स्थितिं सैनिकान् वदेत् एव । तदा तु विपत्तिः निश्चिता । अतः अचिरात् एव इतः आवयोः निर्गमनं वरम्'' इति ।

जयमल्लस्य कथनं केशवे धैर्यम् अपूरयत् । सः जयमल्लम् अपृच्छत् – ''सर्वत्र सैनिकैः अन्वेषणे क्रियमाणे आवां कथं वा पलायनं कर्तुं शक्नुयाव ?'' इति ।

तावता ब्रह्मदण्डिमान्त्रिकस्य कासशब्दः स्वगतसम्भाषणं च श्रुतम् – ''अहो हो, मम उग्रभैरवः तैः समूलम् उत्पाटितः इति भाति । सः मान्त्रिकः मत्तः अपि बलवत्तरः एव । कालभैरवस्य मुखस्य पिधानं कृतवान् सः इदानीं तं खण्डितवान् अपि । एषः धूमः

कुतः ? अहो, एषोऽहं मृतः । मया इतः पलायनं करणीयम् एव । इतः बहिः गतं चेत् सैनिकाः मां ग्रहीष्यन्ति । ते मां पीडयेयुः एव । कालभैरव ! कीदृशी गतिः कल्पिता भवता !'' इति ।

तेन कृतं पौनःपुन्येन आह्वानं केशवजयमल्लाभ्यां निरन्तरं श्रूयते स्म ।

''सैनिकाः गुप्तमार्गे तादृशं किमपि वस्तु स्थापितवन्तः सन्ति, येन च बिलस्थः मूषकः इव एषः मान्त्रिकः परितपति'' इति अवदत् जयमल्लः ।

जयमल्लस्य स्वरः यद्यपि क्षीणः एव आसीत्, तथापि मान्त्रिकः तदीयं कथनं श्रुतवान् आसीत् एव ।

''अये वञ्चक शिष्य ! भवतः कथनं मया न श्रूयते इति भवान् चिन्तयति किम् ?'' इति उच्चैः उक्त्वा पुनः पुनः कासं कृतवान् मान्त्रिकः ।

''इतः निर्गमनस्य मार्गम् अहं जानामि एव । धूमकारणतः मरणात् अपि इतः निर्गमनं वरम् । गुहातः बहिः पर्वते सर्वत्र सैनिकाः मम ग्रहणाय अवसरं प्रतीक्षमाणाः स्युः । यदि ते मां गृह्णीयुः तर्हि अहं तान् भवतोः स्थितिं निवेद्य बन्धनं कारयिष्यामि । ते भवतोः शिरश्छेदं करिष्यन्ति अवश्यम्'' इति पुनः अवदत् मान्त्रिकः ।

किञ्चित्कालानन्तरं केशवजयमल्लाभ्यां पादध्वनिः श्रुतः । जयमल्लः अचिन्तयत् यत् मान्त्रिकः इतः पलायमानः अस्ति इति ।

'यथा उक्तं तथा एव कुर्यात् अपि एषः मान्त्रिकः । सैनिकैः यदि सः आवां ग्राहयेत्



तर्हि आवयोः दुर्गतिः निश्चिता । यदि सैनिकेभ्यः सः स्वरक्षणं कर्तुं समर्थः भवेत् तर्हि अपि अपायः तु भवेत् एव । यतः सैनिकाः सर्वत्र अन्विष्यन्तः आवां गृह्णीयुः एव । मान्त्रिकात् सैनिकेभ्यः च आत्मनः रक्षणं न हि सरलम्' इति चिन्तयित्वा जयमल्लः केशवम् उद्दिश्य – 'भवान् अत्रैव तिष्ठतु' इति संसूच्य गुहातः बहिः गत्वा सर्वत्र दृष्टिं प्रासारयत् । दूरे शिलासमीपे कश्चन सैनिकः दृष्टः तेन । तस्य सैनिकस्य दृष्टिः गुहायाः दिशि न आसीत्, प्रत्युत अन्यत्र आसीत् ।

जयमल्लः गुहायाः अन्तः आगत्य अवदत् – ''इतः आवयोः पलायनं तु अपरिहार्यम् । तदर्थम् एषः सुसमयः । आवयोः अत्र स्थितिं मान्त्रिकः सैनिकान् वदेत् एव । अतः त्वरया

इतः निर्गन्तव्यम् आवाभ्याम्'' इति ।

ततः केशवः जयमल्लः च गुहायाः द्वारस्य समीपं गतवन्तौ । मान्त्रिकस्य उच्चध्वनिः सैनिकानां कोलाहलः च ताभ्यां श्रूयते स्म । गमनं स्थगयित्वा यावत् तौ चिन्तनं कुर्वन्तौ आस्तां तावता कश्चन वृद्धः खड्गहस्तः सन् गुहायाः दिशि एव आगतवान् । गुहायाः पुरतः तेन सिंहः दृष्टः । अतः सः झटिति गमनं स्थगितवान् ।

''अहो, तत्र दृश्यते भवतः पिता !'' इति अवदत् जयमल्लः । केशवः आश्चर्येण पितरम् अपश्यत् ।

जयमल्लः हस्तं चालयन् वृद्धम् अवदत् - ''एषः सिंहः किमपि न करोति । भवान् अग्रे आगच्छतु'' इति । वृद्धः हस्तेन गुल्मान् अपसारयन् अग्रे आगतवान् ।

ततः सुदूरे मान्त्रिकेण क्रियमाणः आसीत् मन्त्रजपः । स च अकस्मात् स्थगितः । तस्य पुरतः आसीत् राजगुरुः । सः मन्त्रजलेन प्रोक्षणं कृतवान् आसीत् ।

तस्य दर्शनात् मान्त्रिकस्य मुखं पिहितं जातम् । ''हे कालभैरव ! भवान् एव शरणं मम'' इति वदन् सः भूमौ अपतत् ।

''कालभैरवः एव असहायः सन् विदारणं प्राप्य गुहायां पतितः अस्ति । भोः, भवतः नाम किम् ?'' इति पृच्छन् मन्दहासं प्रकटयन् मान्त्रिकसमीपम् आगतवान् राजगुरुः ।

अनेकैः सैनिकैः अनुगम्यमानम् अभिमुखम् आगच्छन्तं राजगुरुं दृष्ट्वा मान्त्रिकः नितरां भीतः । कम्पमानेन स्वरेण सः अवदत् - ''महाराज ! मम नाम अस्ति ब्रह्मदण्डी मान्त्रिकः इति'' इति ।

''मया चिन्तितम् आसीत् यत् भवान् कश्चन महामान्त्रिकः स्यात् इति । भवान् तु



सर्वथा मन्दमतिः । राजा कः, राजगुरुः कः इति अभिज्ञातुम् अपि सामर्थ्यं नास्ति भवतः'' इति वदन् राजगुरुः मान्त्रिकं शिखायां गृहीत्वा उन्नीतवान् ।

''महामहिमन् ! राजगुरुवर्य ! एषोऽहं रक्षणीयः भवता । अहमस्मि भवतः दासानां दासः'' इति दैन्येन अवदत् मान्त्रिकः ।

''भवता किमर्थम् अस्माकं सेनापतिः अरण्ये मारितः ?'' इति मान्त्रिकं कम्पयन् क्रोधेन अपृच्छत् राजगुरुः ।

''राजगुरुवर्य ! सः सेनापतिः न मया मारितः । मम शिष्येण मारितः सः । गुरुद्रोही सः मया बहुधा निषिध्यमानः अपि एतत् अकार्यं कृतवान् धाष्टर्येन'' इति अवदत् मान्त्रिकः ।

''अहो, मया विस्मृतम् एव आसीत् । भवतः तौ शिष्यौ इदानीं कुत्र स्तः ?'' इति नेत्रे रक्तीकृत्य अपृच्छत् राजगुरुः ।

''आर्य ! तयोः अन्यतरः एव मम शिष्यः । अपरः तु अरण्यवासिनः मेषपालस्य मूर्खः पुत्रः । ताभ्यां बहूनि पापकृत्यानि कृतानि'' इति अवदत् मान्त्रिकः ।

''मया पृष्टं तु - तौ कुत्र स्तः इति । ताभ्यां यद्यत् कृतं तस्य विवरणं तु मह्यं न आवश्यकम् । अन्यच्च, ताभ्यां यत् कृतं तस्य उत्तरदायी भवति भवान् एव । भवतः प्रेरणया आदेशेन च विना तौ किमपि कर्तुं न अर्हतः । अतः ताभ्यां यदि किमपि अकृत्यं कृतं स्यात् तर्हि तदर्थं दण्डः अनुभोक्तव्यः भवति भवता एव । तदस्तु नाम, तौ कुत्र स्तः इति आदौ वदतु'' इति आदिशत् राजगुरुः ।




''विश्वासघातिनौ तौ सिंहगुहायाः अन्तः निलीय तिष्ठतः । यदि अचिरात् एव तयोः ग्रहणं न क्रियेत तर्हि तौ भयङ्करखातं प्रति गमिष्यतः । वैधवेयः मम शिष्यः जयमल्लः भयङ्करखातविषये सर्वं जानाति । केशवेन कालभैरवप्रभावात् यद्यत् उक्तं तत्सर्वं सः निलीय स्थित्वा श्रुतवान् अस्ति'' इति अवदत् मान्त्रिकः ।

भयङ्करखातशब्दस्य श्रवणात् राजगुरुः महत् आश्चर्यं प्राप्तवान् । स च शब्दः इतःपूर्वम् अपि श्रुतः आसीत् तेन । 'एतस्मिन् अरण्यप्रदेशे एतस्य मान्त्रिकस्य स्थितिः, तेन क्रियमाणं कालभैरवोपासनं, सेनापतेः हननम् इत्यादीनां सर्वेषां पृष्ठभूमिकायां भयङ्करखातस्य सम्बन्धः अस्ति' इति सः अवगतवान् ।

मान्त्रिकेण सूचितं लक्षणं सैनिकान् उक्त्वा राजगुरुः आदिष्टवान् यत् सिंहगुहां गत्वा जयमल्लकेशवयोः बन्धनं करणीयम् इति ।

सैनिकाः तस्यां दिशि वेगेन प्रस्थितवन्तः । तावता वृद्धेन सह आगच्छन्तौ केशवजयमल्लौ तैः दृष्टौ । सैनिकः कश्चित् शिलायाः उपरि स्थित्वा उच्चस्वरेण पृष्टवान् - ''अये वृद्ध ! तौ कुत्र नीयेते भवता ?'' इति ।

एतत् श्रुत्वा वृद्धः विना भीतिम् अवदत् - ''मया कुत्रापि न गम्यते । एतौ समीपतरेण मार्गेण राजगुरुसमीपम् एव आनयन् अस्मि अहम् । मया प्राप्यमाणं पारितोषिकम् अपहर्तुम् इच्छति भवान् प्रायः । तत् सर्वथा न शक्यते । भवान् स्वकार्यं करोतु तावत्'' इति ।

''मरणम् आसन्नं चेदपि धनस्य आशा तु न परित्यज्यते एतेन वराकेण वृद्धेन'' इति स्वगतं वदन् आत्मना दृष्टं राजगुरुं वक्तुम् इच्छन् ततः वेगेन निर्गतवान् सः सैनिकः ।

राजगुरुः तु यद्यपि भयङ्करखातविषये विवरणं सङ्ग्रहीतुम् इच्छति स्म, तथापि शिष्ययोः बन्धनस्य अनन्तरम् एव एतस्य मुखात् वाचनं वरम् इति सः निरणयत् । शिष्ययोः पुरतः एषः असत्यं वक्तुं नार्हति इति सः जानाति स्म ।

सः मान्त्रिकस्य गर्वं चूर्णीकर्तुम् इच्छति स्म । तस्मात् तेन सेनापतिः सूचितः - ''एतस्य हस्तौ पादौ च बद्ध्वा वन्यसूकरम् इव एतं वेणुदण्डे लम्बयित्वा नगरं नयन्तु । कश्चित् सेवकं वेगेन प्रेषयित्वा वार्तां प्रसारयितुं सूचयतु यत् मान्त्रिकस्य ग्रहणं निमित्तीकृत्य राजधान्याम् उत्सवः आचरणीयः इति । उभौ भटौ एतस्याः गुहायाः रक्षणाय नियोक्तव्यौ'' इति ।

राजगुरोः आज्ञां प्राप्य सैनिकाः मान्त्रिकस्य हस्तौ पादौ च बद्धवन्तः । ततः दीर्घं दण्डम् आनीय मान्त्रिकं सूकरम् इव दण्डे उत्तोलितवन्तः ते । दण्डस्य उभयपार्श्वं गृहीत्वा उन्नीय ततः प्रस्थितं तैः ।

दण्डस्य कम्पनं यदा भवति तदा वेदनाम् अनुभवन् मान्त्रिकः विलपति स्म - ''हे भैरवेश्वर ! उपासककल्पतरो ! कीदृशम् अपमाननम् एतत् कार्यते भवता !'' इति ।

राजगुरुः एतत् श्रुत्वा हसन् पर्वतमूले बद्धस्य स्वस्य अश्वस्य दिशि प्रस्थितवान् ।

- *(अनुवर्तते)*



# वेताल-कथा

## राज्ञः स्नुषाः

अङ्गीकृतं कार्यं कथमपि परित्यक्तुम् अनिच्छन् त्रिविक्रमः पुनरपि वृक्षस्य समीपं गत्वा शाखायां लम्बमानं शवं स्कन्धे आरोप्य यथापूर्वं मौनेन श्मशानं प्रति प्रस्थितवान्। तदा शवान्तर्गतः वेतालः अवदत् – "अये राजन् ! अभीष्टस्य साधनाय भवान् महान्तं प्रयत्नं करोति यत् तत् तु श्लाघार्हम् एव। किन्तु एतदत्र स्मर्तव्यं यत् केवलेन श्रमेण, केवलया सहनया च कार्यं न सिद्ध्यति इति। कार्यसिद्धये विवेकः लोकज्ञानं च आवश्यके। वाक्चातुर्यम् अपि अत्र उपकरोति। एते गुणाः आत्मनि सन्ति उत न इति भवता स्वयं निर्णेतव्यम्। अत्र उपकाराय तिसृणां राजस्नुषाणां कथाम् अहं



श्रावयामि । तां श्रद्धया शृणोतु, येन मार्गायास-परिहारः अपि भवेत्'' इति ।

अनन्तरं वेतालेन कथा आरब्धा -

महेन्द्रपुर्याः राजा महेन्द्रवर्मा । विवाहानन्तरं महान् कालः अतीतः चेदपि तेन अपत्यं किमपि न प्राप्तम् । सन्तानप्राप्त्यर्थं राजा राज्ञी च विविधानि व्रतानि अनुष्ठितवन्तौ, बहूनि तीर्थ-क्षेत्राणि गतवन्तौ च । तथापि अपत्यं तु न प्राप्तुम् । अन्ते तौ निर्णीतवन्तौ यत् सन्तान-प्राप्तिभाग्यम् आवयोः ललाटे लिखितं नास्ति इति ।

एवं स्थिते कदाचित् राज्ञी रात्रौ कञ्चित् स्वप्नं दृष्टवती । स्वप्ने तया पञ्चमुखः सर्पः दृष्टः । सर्पः राज्ञीम् अवदत् - ''भवती मम मन्दिरस्य पुरतः कृष्णशिलया नागप्रतिमां निर्माप्य प्रतिष्ठापयतु । चत्वारिंशद्दिनानि यदि भवती तां प्रतिमां क्षीरेण अभिषिञ्चेत् तर्हि भवत्या सन्तानः प्राप्स्यते'' इति ।

प्रातः जागरणं प्राप्य राज्ञी राजानं स्वप्न-वृत्तान्तं निवेद्य अवदत् - ''अस्माकम् इष्टदेवः यथा उक्तवान् तथा करवाम'' इति ।

ततः सप्ताहाभ्यन्तरे एव राजा राज्ञी च पर्वतस्य उपरि नागेन्द्रमन्दिरस्य प्राङ्गणे नाग-प्रतिमां प्रतिष्ठापितवन्तौ । श्रद्धया भक्त्या च क्षीरेण तौ तस्याः प्रतिमायाः अभिषेकं कृत-वन्तौ । चत्वारिंशत्तमे दिने कश्चन विचित्रः जनः तयोः समीपम् आगतः । सः कृशः, उन्नतः, कृष्णवर्णीयः च आसीत् । इतःपूर्वं कुत्रापि न दृष्टः आसीत् सः ।

सः स्वस्य स्यूततः त्रीणि आम्रफलानि निष्कास्य राज्ञ्यै दत्त्वा अवदत् - ''मन्दिरस्य अन्तः गत्वा एतानि फलानि भवती खादतु । तेन भवत्या सुन्दराः त्रयः पुत्राः प्राप्स्यन्ते'' इति ।

राज्ञी भक्त्या श्रद्धया च तानि स्वीकृत्य नेत्राभ्यां स्पर्शं कारितवती । तस्य पुरुषस्य आदेशं शिरसा वहन्ती सा मन्दिरस्य अन्तः गत्वा तानि फलानि खादितवती अपि ।

नवानां मासानाम् अनन्तरं तया त्रयः पुत्राः प्राप्ताः । तेषां नाम कृतं - जयः विजयः अजयः चेति । महत्या प्रीत्या तान् पोषितवन्तौ राजा राज्ञी च ।

त्रयः अपि राजकुमाराः सौन्दर्येण बुद्धि-मत्तया पराक्रमेण च समानाः आसन् । विंशतितमं वर्षं यावत् प्राप्तं तावता ते सर्वासु विद्यासु पारङ्गताः जाताः ।

समाने एव मुहूर्ते त्रयाणाम् अपि विवाहः

निर्वर्तितः राज्ञा । तिस्रः स्नुषाः अपि सामन्तकुले जाताः ।

गच्छता कालेन राज्ञः स्वास्थ्यं विनष्टम् । वार्धक्यकारणतः सः शक्तिहीनः जातः । राजवैद्यः अवदत् यत् एतस्य स्वास्थ्ये विशेषप्रगतिः न भविष्यति इति । अतः राज्ञः पुरतः समस्या उद्भूता यत् कः राजपदे नियोक्तव्यः इति । यतः त्रयः अपि सामर्थ्येन बुद्धिमत्तया पराक्रमेण च समानाः एव आसन् ।

राजा बहुधा विचिन्त्य अपि कमपि परिहारमार्गम् अप्राप्य तत् दायित्वं मुख्यमन्त्रिणे चन्द्रशेखराय दत्तवान् ।

अनन्तरदिने एव प्रधानमन्त्रिणा युवराजेभ्यः विविधाः परीक्षाः आयोजिताः । विशेषतया राजनीतिविषये परीक्षा कृता तेन । किन्तु तासु परीक्षासु त्रिभिः अपि समाना एव प्रतिभा दर्शिता ।

यत् प्रवृत्तं तत् राजानं निवेद्य चन्द्रशेखरः अवदत् – ''महाराज ! त्रयः अपि सिंहासनस्य उत्तराधिकारितां प्राप्तुम् अर्हाः एव । त्रयाणाम् अपि योग्यता समाना । एवं स्थिते, कश्चित् एकः राजत्वेन घोषितः चेत् अपरयोः अन्याय्यं भविष्यति'' इति ।

राजा वर्धितचिन्तः सन् मन्त्रिणम् उक्तवान् – ''मन्त्रिवर्य ! समस्या इतोऽपि जटिला एव जायमाना अस्ति । इदानीं किं करवाम ?'' इति ।

क्षणं विचिन्त्य मन्त्री अवदत् – ''महाराज ! एतदर्थम् अस्ति कश्चन उपायः । यदि भवतः अनुज्ञा स्यात् तर्हि अहं भवतः स्नुषाभिः सह एकान्ते मिलेयम् । मम प्रश्नानाम् उत्तरं यत्



ताभिः दीयेत तदाधारेण निर्णेतुं शक्यं स्यात् यत् भाविनि काले कः राजा करणीयः इति'' इति ।

तदा राजा अवदत् – ''यत् यत् इष्यते तत् सर्वं शीघ्रम् एव करोतु भवान् । मम एषा समस्या तु अचिरात् निवारिता भवेत् एव'' इति ।

राज्ञः अनुज्ञां प्राप्य मन्त्री आदौ जयस्य पत्नीं प्रकोष्ठम् आनाय्य अपृच्छत् – ''देवि ! भवत्याः पतिः राजा यदि न क्रियेत तर्हि किं कुर्यात् भवती ?'' इति ।

एतत् श्रुत्वा जयस्य पत्नी निराशा सती क्षीणस्वरेण अवदत् – ''राजत्वं तु भाग्यवशात् प्राप्यते । यदि तत् भाग्यं मम पत्युः ललाटे लिखितं न स्यात् तर्हि मौनेन स्थितिः एव गतिः मम'' इति ।



एतदनन्तरं विजयस्य पत्नी प्रकोष्ठम् आगता । मन्त्री ताम् अपि पूर्वतनम् एव प्रश्नम् अपृच्छत् ।

एतत् श्रुत्वा विजयस्य पत्नी अपि खेदेन अवदत् - ''किं करवाणि ? भगवान् मम प्रार्थनां न पुरस्कृतवान् इति चिन्तयन्ती अहं पश्चात्तापम् अनुभविष्यामि । मम श्रद्धायां भक्त्यां च कोऽपि लोपः अस्ति इति अहं चिन्तयिष्यामि'' इति ।

अन्ते अजयस्य पत्नी आगता । अन्ये इव एताम् अपि मन्त्री यदा अपृच्छत् तदा झटिति एव सा अवदत् - ''मम पत्युः राजत्वस्य अप्राप्तेः प्रसङ्गः एव नास्ति । अहं मम पत्युः शक्तिं सामर्थ्यं कौशलं च सम्यक् जानामि । जीवने तस्य पराजयः कदापि न भविष्यति इत्यत्र मम दृढः विश्वासः अस्ति । एवं स्थिते अपि सः राजा न भवेत् इति चिन्तनं भवतः मनसि कथं समुद्भूतम् इति अहं तु न जानामि'' इति ।

तस्याः निर्गमनस्य अनन्तरं मन्त्री राजानम् अवदत् - ''महाराज ! अजयः एव राजा क्रियताम्'' इति ।

वेतालः एवं कथां समाप्य अवदत् - ''राजन् ! मन्त्री चन्द्रशेखरः यं मार्गं दर्शितवान् सः विवेकहीनः राजनीतिचातुर्यरहितः च किं न आसीत् ? पत्नीः प्रश्नान् पृष्ट्वा पतीनां सामर्थ्यस्य निर्णयः किं योग्यः ? ज्येष्ठे स्नुषे यत् उत्तरम् उक्तवत्यौ तत् सौम्यतापूर्णम् आसीत् । भगवति तयोः विश्वासः स्फुटतया भासते स्म । तृतीया स्नुषा तु धाष्टर्येन उत्तरम् उक्तवती । ज्येष्ठेषु अनादरः अपि तस्याः आसीत् । तस्याम् अहङ्कारः आसीत् इति तु

स्पष्टम् । सा वाक्चातुर्येण सूचितवती यत् मत्पतिसदृशः अन्यः नास्ति इति । यदि मम पतिः राजा न क्रियेत तर्हि देशे सङ्घर्षः भवेत्, अशान्तिः च उत्पद्येत इति तया परोक्षतया सूचितम् अपि । तथापि मन्त्री राजानं यत् उक्तवान् तत्र भयं किं कारणम् ? मम एतेषां प्रश्नानाम् उत्तरं जानन् अपि यदि भवान् न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति ।

तदा मौनेन स्थातुम् अशक्तः त्रिविक्रमः उक्तवान् - ''त्रयः अपि राजकुमाराः समान-योग्यतावन्तः । ते त्रयः अपि सिंहासनारोहणे अर्हाः एव इति तु स्पष्टम् एव । सिंहासनारोहण-विषये तेषु स्पर्धा अपि न आसीत् । मया एव सिंहासनम् आरोढव्यम् इति तेषु कोऽपि न चिन्तयति स्म । किन्तु पुरुषाणां यः व्यवहारः भवति तत्र पत्नीनां प्रभावः अपि कश्चन भवति एव । राज्ञां जीवने अपि एतत् भवति एव । अतः एव मन्त्री चिन्तितवान् यत् राज्ञः स्नुषाणां प्रतिस्पन्दम् अवलम्ब्य युवराजानां वैशिष्ट्यं किमपि ज्ञातव्यम् इति । राज्ञः स्नुषाः अपि गुणवत्यः एव । ज्येष्ठा जयस्य पत्नी सहन-शीला । भाग्ये यत् लिखितं तत् सहनया सोढव्यम् इत्यत्र तस्याः विश्वासः । परिस्थितेः विरोधं कर्तुं न इच्छति सा । विजयस्य पत्नी भगवद्भक्ता । सर्वं भारं भगवति आरोप्य जीवति सा । भगवान् एव सर्वस्य कारणम् इति चिन्तयति सा । तृतीया अजयस्य पत्नी एतादृशस्वभावयुक्ता न । सा पत्युः धैर्यम् आत्मविश्वासं च वर्धयितुम् इच्छति । राजा आत्मविश्वासवान् भवेत् एव । एतया दृष्ट्या अजयस्य पत्नी विशिष्टा इव भासते । एवं त्रिषु अपि राजकुमारेषु गुणेन साम्यता अस्ति चेत् अपि पत्नीसहकाररूपः विशेषांशः अजयस्य एव अस्ति, न तु जयविजययोः । अतः एव मन्त्री राजानम् असूचयत् यत् अजयः एव राजा भवतु इति । देशे अशान्तिः भवेत्, अजयः शासनविरोधं कुर्यात् इत्यादीनि तु कारणानि न आसन् मन्त्रिणः निर्णयस्य'' इति ।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत् । अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् आलम्बितवान् ।








# पुरस्कृतः सङ्ग्रहालयः

मुम्बयीनगरीयः १५० वर्षात्मकेन इतिहासेन युक्तः विक्टोरिया-आल्बर्ट्वस्तुसङ्ग्रहालयः युनेस्कोद्वारा पुरस्क्रियमाणः अस्ति । एषा एशियाफेसिफिक्प्रशस्तिः सांस्कृतिकपरम्परा-संरक्षणयोजनायाः अङ्गतया दास्यते तया ।

अयं सङ्ग्रहालयः १८८५ तमे वर्षे भावूदाजिलाडवर्येण प्रतिष्ठापितः । तदनन्तरकाले राज्ञीविक्टोरियानाम्ना तस्य निर्देशनम् आरब्धम् । अग्रे तस्याः पत्युः आल्बर्टस्य नाम्ना निर्देशनं प्रवृत्तम् । यदारभ्य तस्य सङ्ग्रहालयस्य संरक्षणदायित्वं मुम्बयीमहानगरसभायाः अधिकारपरिधिम् आगतः तदारभ्य निर्वहणे क्षतिः आगता । अतः १९९६ तमे वर्षे भारत-राष्ट्रकलासांस्कृतिकपरम्परासङ्घद्वारा (INTACH) रक्षणप्रकल्पानां वर्धनाय प्रयोगालय-व्यवस्थापनाय च कश्चन प्रस्तावः कृतः । तस्य प्रस्तावस्य अङ्गीकारानन्तरं निर्णयः कृतः यत् जमनलालबजाजफौण्डेशन्सहयोगेन कार्यनिर्वहणं करणीयम् इति ।

गते वर्षे तस्य १५० तमवार्षिकोत्सवावसरे रक्षणनिर्वहणादिकं परिष्कृतं जातम् । एवं हि श्रूयते यत् इदानीं तत्रत्यान् प्रकोष्ठान् प्रविशामः चेत् अरेबियन्रात्रीणां कल्पनायाः अनुभूतिः प्राप्यते इति ।

पूर्वं यत् भवनं शिथिलावस्थायाम् आसीत् तत् इदानीं संस्थापकस्य भावूदाजिलाडवर्यस्य नाम्ना पुनः शोभमानं जातम् अस्ति ।

# तमिळुनाडुराज्यीया जानपदकथा

# प्रियः राजा प्रत्यागतः

चोलदेशे मङ्गलापुरं नाम राज्यम् आसीत् । तं देशं राजरत्नः नाम राजा पालयति स्म । सः श्रेष्ठः राजा आसीत् । प्रजानां हितम् एव तस्य शासने प्राधान्यं वहति स्म । अतः तदीयं राज्यं शन्तिपूर्णम् आसीत् । तस्य राज्ये प्रजाः सुखेन वसन्ति स्म ।

तस्य देशस्य भूमिः अपि फलवती एव आसीत् । अतः देशे फलसमृद्धिः अपि उत्तमा भवति स्म । प्रजाभिः यः करः दीयते तेन राज्ञः कोषः पूर्णः आसीत् ।

राजरत्नः दानशीलः आसीत् । अतः सः प्रजाभ्यः भूरि धनानिकं ददाति स्म । कुशलकर्मिणः, शिल्पिनः, कवीन् च विशेषतः प्रोत्साहयति स्म सः ।

राजरत्नस्य अनुजः मणिरत्नः । अग्रजः कोषस्य सम्पत्तिं व्ययीकरोति यत् ततः सः नितरां खिन्नः भवति स्म । 'यदि अग्रजः कोषस्य सम्पत्तिम् एवमेव व्ययीकुर्यात् तर्हि तदीयस्य मरणस्य अनन्तरं मया राजत्वं यदा प्राप्स्यते तदा मया किमपि न प्राप्येत' इति चिन्ता आसीत् तस्य ।

यथा यथा दिनानि गतानि तथा तथा मणिरत्नस्य आशा अवर्धत । सः अचिन्तयत् - 'यावत् अग्रजः इहलोके स्थास्यति तावत् तदीया दानप्रवृत्तिः निवारिता न भविष्यति' इति । किन्तु मारणरूपम् अपराधं स्वयं कर्तुं सिद्धः न आसीत् सः ।

अतः एतदर्थं सः योग्यस्य सहायकस्य अन्वेषणम् आरब्धवान् । राज्ञः आत्मीयेन केनचित् एतत् कार्यं कारणीयम् इति चिन्तनम् आसीत् तस्य ।

राज्ञः पाचकः तेन सूचितः – 'भोजने विषयोजनेन राजा मार्यताम्' इति ।

किन्तु पाचकः अवदत् - 'राज्ञा सह अतिथयः सदा भवन्ति एव भोजनावसरे ।





वान् । मणिरत्नतः धनस्वीकारं सः निराकृतवान् अपि ।

अनतिकाले एव मणिरत्नेन आचरितं दुष्कृत्यम् आस्थानिकैः सर्वैः ज्ञातम् । राजा मणिरत्नं कठोरतया दण्डयेत् इति सर्वैः चिन्तितम् आसीत् । आश्चर्यं नाम राज्ञा तथा न कृतम् एव । प्रत्युत सः सभायाम् अघोषयत् - ''राज्यभारं निरन्तरं निर्वहता मया नितरां परिश्रान्तम् अस्ति । अतः अहम् अरण्यं गत्वा तपः चरितुम् इच्छामि । मम सहोदरः इतः परं राज्यभारं निर्वक्ष्यति'' इति ।

'एतादृशी मूर्खता न उचिता' इति बहवः आस्थानिकाः राजरत्नं बहुधा अबोधयन् ।

''वस्तुतः राज्यमोहेन मम अत्र स्थितिः एव मूर्खताद्योतिका'' इति उक्त्वा अनुजम् आनाय्य स्वशिरसि स्थितं किरीटं तस्य शिरसि स्थापितवान् राजरत्नः । न आसीत् पट्टाभिषेकोत्सवः मणिरत्नस्य सिंहासनारोहणं निमित्तीकृत्य । न वा आसीत् आप्रच्छनसमारम्भः अरण्यं प्रति राजरत्नस्य गमनं निमित्तीकृत्य । अनन्तरदिने एव राजरत्नेन अरण्यं प्रति निर्गतम् ।

यदि कदाचित् अजागरूकतावशात् विषमिश्रितम् अन्नादिकम् अन्येन प्राप्येत तर्हि मम प्राणाः निर्गच्छेयुः । अतः एतादृशं कुकृत्यम् अहं न करिष्यामि'' इति ।

अन्ते मणिरत्नः प्रभूतस्य धनस्य आशां प्रदर्श्य राजक्षौरिकम् एतस्मिन् कार्ये नियोजितवान् । अनन्तरदिने राज्ञः मुखक्षौरं कुर्वन् नापितः आकस्मिकताम् अभिनयन् छुरिकां राज्ञः वक्षसः उपरि पातितवान् । किन्तु राजा ततः न व्रणितः । सः क्षणकालं मौनेन अतिष्ठत् ।

भीतः नापितः आत्मीयानां केषाञ्चित् आस्थानिकानां पुरतः स्वस्य अपराधम् अङ्गीकृत्य मणिरत्नस्य कुतन्त्रम् अपि प्रकाशित-

अग्रजविषये मणिरत्नेन कृतः अनुचितः व्यवहारः सर्वैः ज्ञातः आसीत् एव । प्रजानां विषये मणिरत्नस्य प्रीतिः अपि न आसीत् । तथापि सर्वे मौनेन स्थितवन्तः । यतः अन्या गतिः न आसीत् तेषाम् ।

मणिरत्नः सिंहासनप्राप्त्या कानिचन दिनानि

सन्तोषेण अतिष्ठत् । जनाः आस्थानिकाः वा तदीयस्य मुखस्य दर्शने अधिकतया उत्साहिनः न आसन् । एतदपि उचितम् एव इति अचिन्तयत् मणिरत्नः । सः प्रकोष्ठे एव तिष्ठन् अधिक-कालं यापयति स्म ।

गच्छता कालेन तस्य मनसि विचारः आगतः यत् अग्रजस्य मारणाय मया यथा गुप्ततया प्रयासः कृतः तथैव अग्रजपक्षपाती कोऽपि मम मारणाय अपि उपायं चिन्तयन् स्यात् इति । राजरत्नः यद्यपि अरण्ये वसन् ध्यानादिषु मग्नः आसीत् तथापि मणिरत्नः अचिन्तयत् यत् यावत् मम अग्रजः जीविष्यति तावत् मम निश्चिन्तता न भवेत् इति । अतः सः उद्घोषितवान् यत् अहं यत् वदामि तत् यः करोति तस्मै मया अर्धराज्यं दास्यते इति । किन्तु कोऽपि तेन सूच्यमानं कार्यं कर्तुम् उत्सुकः न जातः ।

कदाचित् कश्चन कविः आस्थानम् आगतः । राजरत्नस्य निर्गमनस्य अनन्तरम् राजास्थानं प्रति कवीनां गमनागमनं कविताश्रावणं च पूर्णतः स्थगितम् एव आसीत् । कविः मणिरत्नं नमस्कृत्य कवितापठनाय अनुज्ञाम् अयाचत । तदा मणिरत्नः अवदत् - ''भवतः कवितायाः श्रवणे मम न कापि इच्छा । यदि भवान् धनम् इच्छेत् तर्हि अरण्यं गत्वा मम अग्रजस्य शिरः आनयेत् । तदा राज्यस्य अर्धभागः एव दास्यते मया'' इति ।

कविः पुनः तत्र क्षणं यावत् अपि न अतिष्ठत् । सः अरण्यं प्रति वेगेन अगच्छत् । किन्तु तत्र गच्छतः तस्य उद्देशः अन्यः एव आसीत् । सः अरण्यं गत्वा राजरत्नं दृष्ट्वा राजास्थाने यद्यत् प्रवृत्तं तत्सर्वम् अश्रावयत् । पूर्वं कीदृशी स्थितिः आसीत्, इदानीं च का स्थितिः इति महता विषादेन व्यवृणोत् सः ।

सर्वं श्रुत्वा महान्तं खेदं प्रकटयन् स्वस्य असहायकतां च प्रदर्शयन् राजरत्नः अवदत् - ''एतस्यां स्थितौ अहं भवते किमपि दातुं न अर्हामि । तथापि चिन्ता करणीया नास्ति भवता । अत्रास्ति मम खड्गः । एतेन मम शिरः छिद्यताम् । तत् नीत्वा मणिरत्नाय दत्त्वा अर्धराज्यं प्राप्यताम्'' इति ।

तदा कविः अवदत् - ''एतत् नृशंसं कार्यम्



अहं कथं कुर्यां महाराज ! पत्नीपुत्रादिभिः सह उपवासेन मरणम् अपि प्राप्तुम् अहं सिद्धः, न तु एतादृशं घोरम् अकृत्यं कर्तुम् । कृपया अहं क्षन्तव्यः'' इति ।

ततः सः गृहं गत्वा अरण्ये प्रवृत्तं सर्वं पद्यरूपेण विलिख्य तत् पत्रं मणिरत्नाय प्रेषितवान् । पद्यस्य अन्ते तेन लिखितम् आसीत् – ''शिरोविहीनं मङ्गलापुरसाम्राज्यं यत् शिरः प्राप्तुम् इच्छति तत् शिरः तु वराकस्य कवेः साहाय्याय आत्मसमर्पणं कर्तुम् उद्यतम् अस्ति, देशस्य हिताय आत्मानं बलिरूपेण अर्पयितुम् अपि सिद्धम् एव अस्ति तत्'' इति ।

मणिरत्नः एतत् पद्यम् अपठत् । क्षणकालं सः मौनेन अतिष्ठत् । 'अहं दुष्टविचारपिशाचेन आविष्टः सन् अग्रजस्य संहाराय प्रयतमानः अस्मि । अग्रजः तु सामान्यस्य कस्यचित् कवेः सन्तोषाय स्वस्य प्राणान् एव अर्पयितुम् अपि सिद्धः अस्ति । धिक् माम् । धिक् मम अविवेकिताम्' इति सः अचिन्तयत् । सः पश्चात्तापेन दग्धः जातः ।



सः झटिति आज्ञापयत् – प्रयाणाय कश्चन अश्वः सज्जीक्रियताम् इति ।

राजत्वप्राप्तेः अनन्तरं प्रथमवारं प्रासादात् बहिः गच्छन् अस्ति सः । निरायुधः सन् सः अरण्यं प्रति वेगेन अगच्छत् । श्मश्रुधारिणम् अग्रजं पादग्रहणपूर्वकं नमस्कृत्य क्षमां याचन् सः अवदत् – ''अग्रज ! कश्चन कविः मयि विवेकम् अजागरयत् । भवान् यदा राजा आसीत् तदा भवतः मारणाय कुतन्त्रं रचयता मया मूर्खता आचरिता । भवतः शिरसः छेदाय मार्गं चिन्तयता मया अर्धराज्यदानम् उद्घोषयता अन्या अपि मूर्खता अनुष्ठिता । कृपया राजधानीं प्रत्यागत्य समग्रं राज्यं स्वीकरणीयम् इति मम नम्रा प्रार्थना । एतस्मिन् राज्ये सामान्यः जनः इव वासं कर्तुमपि मम नास्ति अधिकारः । कृपया क्षन्तव्यः अहम्'' इति ।

मणिरत्नः अग्रजं सानुरोधम् एवम् उक्त्वा तम् अश्वे उपवेश्य तस्य पृष्ठतः उपविश्य राजधानीं प्रति प्रस्थितवान् । राजरत्नस्य प्रत्यागमनवार्ता राजभवने विद्युत्सञ्चारम् अजनयत् । सवैभवं स्वागतं प्रवृत्तं तत्र ।

मणिरत्नः अग्रजं सादरम् आस्थानं नीत्वा राजमुकुटं तस्य शिरसि स्थापितवान् । स्वयं च तस्य पादमूले विनयेन उपविष्टवान् ।

जनानां नेत्राभ्यां निरन्तरं निर्गच्छति स्म आनन्दाश्रुधारा ।

## वार्ताविशेषः

### तान्त्रांशसाहाय्येन गजाभिज्ञानम्

केरलराज्ये प्रायशः अष्टशतं (८००) गजाः जनैः पाल्यमानाः सन्ति प्रायः । किन्तु तेषु ८० प्रतिशतं गजानां स्थितिगत्यादिकं, तेषां स्वामित्वादिकं वा न ज्ञायते । अतः एव कः गजः कुत्र अस्ति, कथम् अस्ति इत्यादिकं केनापि न ज्ञायते । एतदर्थम् अरण्यविभागेन किञ्चन सूक्ष्मम् अभि-ज्ञानसाधनम् (मैक्रो चिप्) अन्विष्टम् अस्ति, यच्च लघ्वाकारकं सत् चर्मणः अन्तर्भागे निवेशयितुं शक्यम् । एषा योजना २००३तमे वर्षे एव सर्वकारेण यद्यपि अनुमता अस्ति, तथापि अभिज्ञानसाधनानां निर्माणे जायमानस्य विलम्बस्य कारणतः योजनायाः क्रियान्वयने अपि विलम्बः जायमानः अस्ति । एतावता तद्राज्याय १२०० साधनानि प्रदत्तानि सन्ति । यदा एते परिकराः कार्यकरणे समर्थाः भवेयुः तदा ज्ञायते गजानां संख्यादिकम् । ततः च तेषां गजानां दिनचरी, आहारसेवनक्रमः, तेषां च व्याधयः, तदर्थम् औषधदानम्, परिणामः इत्यादिषु विषयेषु विवरणप्राप्तिः शक्या उपग्रहद्वारा । तादृशः तन्त्रांशः १४ उपमण्डलेषु सज्जीक्रियमाणः अस्ति इदानीम् ।






### लेखनक्षेत्रे अपूर्वा सिद्धिः

चेन्नैनगरे कविता नाम महाविद्यालयविद्यार्थिनी काचित् उत्पीठिकायाः पुरतः उपविश्य पूर्णप्रमाणकेषु (फुल् स्केप्) पत्रेषु लेखनम् आरब्धवती । नैरन्तर्येण २६ होराः यावत् ३१२ पृष्ठानि लिखित्वा नूतनेतिहासोल्लेखसाधनां सा कृत- वती । इतः पूर्वम् एतस्मिन् क्षेत्रे कृता सिद्धिः आसीत् २४ घण्टानां निरन्तरलेखनस्य । लिम्का-पुस्तके तस्याः नाम्नः उल्लेखः कृतः अस्ति ।



# गोविन्दस्य चातुर्यम्

गोविन्दः नाम कश्चित् कृषिकः आसीत् पूर्वम् । तस्य वृषभद्वयम् आसीत् । एकदा सः सायङ्काले कृषिकार्यं समाप्य क्षेत्रतः गृहं प्रत्यागतवान् । जलं पाययित्वा ग्रासं दत्त्वा तौ वृषभौ सः गोष्ठे बद्धवान् । किन्तु यदा प्रातः गोष्ठः प्रविष्टः, तदा तत्र एकः एव वृषभः तेन दृष्टः । अपरः न दृश्यते स्म तत्र । द्वितीयः वृषभः कुत्र गतः इति ज्ञातुं सः न शक्तवान् । नितरां व्याकुलता प्राप्ता तेन । बहुधा अन्वेषणं कृतं चेदपि वृषभः कुत्र गतः इति तु न ज्ञातम् एव तेन ।

वर्षर्तुः सन्निहिता । वृष्टिः आरब्धा चेत् कर्षणं तु करणीयम् एव । वराकः सः एकेन वृषभेण कर्षणं कथं कुर्यात् ? अपरेण विना कृषिः तु असाध्या इत्यतः सः वृषभं कञ्चित् क्रेतुम् इच्छन् पशूनां क्रयविक्रयस्थानं गतवान् ।

तस्य अपरः वृषभः येन चोरेण अपहृतः आसीत्, सः चोरः अपि तं चोरितं वृषभं विक्रेतुं तत्रैव आगतवान् आसीत् ।

गोविन्दः उत्तमवृषभस्य अन्वेषणं कुर्वन् सर्वत्र भ्रमणं कृतवान् । एकत्र तेन बलयुतः वृषभः दूरात् अवलोकितः । तस्य समीपं गत्वा दृष्टवतः तस्य आश्चर्यानन्दयोः मितिः एव न आसीत्, यतः सः तदीयः एव वृषभः आसीत् । तस्य विक्रेतारं सः उच्चस्वरेण अवदत् - ''एतत् वस्तुतः वञ्चनाकार्यम् अस्ति । अयं वृषभः मदीयः एव । आ गतेभ्यः चतुर्भ्यः वर्षेभ्यः अहम् अस्यैव साहाय्येन कृषिं कुर्वाणः आसम्'' इति ।

गोविन्दस्य वचनं श्रुत्वा भीतः चोरः दिग्भ्रान्तः अभवत् । तथापि स्वल्पं धैर्यं धृत्वा सः - ''दिवा एव असत्यम् उच्यते खलु भवता ! वर्षचतुष्टयतः भवतः निकटे आसीत् किम् एषः वृषभः ? सर्वथा असत्यम् एतत् । यतः आ पञ्चभ्यः वर्षेभ्यः एषः मम आधीन्ये अस्ति । अस्य साहाय्येन एव मया प्रतिवर्षं

कृषिकार्यं निरूद्धम् । पुत्रीविवाहाय धनस्य आवश्यकता अस्ति इत्यतः एतस्य विक्रयणं कर्तुम् आगतवान् अस्मि'' इति अवदत् ।

एतत् श्रुत्वा गोविन्दः किङ्कर्तव्यतामूढः अभवत् । बहवः पशुवणिजः तत्र सम्मिलिताः सन्तः किमर्थम् एतयोः कलहः प्रचलन् अस्ति इति ज्ञातुम् ऐच्छन् ।

कलहस्य कारणं ज्ञात्वा तत्रत्येषु कश्चित् गोविन्दम् उक्तवान् - ''वृथा किमर्थं कलहः ? एषः वृषभः भवदीयः इति साधयितुं किमपि प्रमाणं किं दर्शयेत् भवान् ?'' इति

''किं प्रमाणम् आवश्यकम् ?'' इति वदन् शिरसः उष्णीषं निस्सार्य तेन वृषभस्य नेत्रे पिधाय सः चोरम् उद्दिश्य अवदत् - ''एषः वृषभः भवदीयः यदि स्यात् तर्हि वदतु - अस्य कतरत् नेत्रं दृष्टिहीनम् अस्ति ? वामपार्श्वस्थम् उत दक्षिणपार्श्वस्थम् ?'' इति ।

एतं प्रश्नं श्रुतवतः चोरस्य भीतिः उत्पन्ना । यदि उत्तरम् असत्यं भवेत् तर्हि मम चोरत्वं प्रमाणितं भवेत् इति मनसि तर्कयन् स्वगृहस्य शुनकस्य वामनेत्रेण काणत्वं स्मरन् सः धैर्येण उक्तवान् - ''एतस्य दक्षिणनेत्रमेव दृष्टिहीनम् अस्ति'' इति ।

गोविन्दः तस्य वचनं श्रुत्वा उच्चैः हसन् दक्षिणनेत्रतः वस्त्रं निस्सारयन् जनान् उद्दिश्य उक्तवान् - ''पश्यन्तु भवन्तः, अनेन सूचितं नेत्रं कियत् उत्तमम् अस्ति इति'' इति ।

तदा चोरः म्लानमुखः सन्नपि पुनरपि कम्पमानेन स्वरेण अवदत् - ''हा ! मया अन्यथा उक्तम् । मम वृषभस्य वामपार्श्वस्थमेव नेत्रं दृष्टिहीनम् अस्ति'' इति ।

''तत् वा भवतु, एतत् वा । भवतः वृषभस्य एकं नेत्रं दृष्टिहीनम् इति खलु भवतः आशयः ?'' इति तं पृष्टवान् गोविन्दः ।

''आम् । मम वृषभः एकेन नेत्रेण काणः इति अङ्गीकरोमि'' इति अवदत् चोरः ।

गोविन्दः ततः उष्णीषं निष्कास्य - ''दुष्ट ! मम वृषभः न अन्धः, न वा काणः । पश्य रे मूढ ! एतस्य नेत्रद्वयमपि कथं प्रकाशते इति'' इति उत्साहेन उक्तवान् ।

अनुक्षणं तत्रत्याः सर्वे तं चोरं केशेषु गृहीत्वा बद्धवन्तः, न्यायालयं नीतवन्तः च । एवं गोविन्दः स्वस्य वृषभस्य प्राप्तौ, चोरस्य ग्रहणे चापि सफलः अभवत् ।



# ग्रामाधिकारी

रामपुरीयः भूस्वामी प्रसादः महाधनिकः । पितृपरम्परया तेन प्राप्ता भूमिः यद्यपि अतिविशाला न आसीत्, तथापि स्वस्य बुद्धिमत्तया कुसीदवाणिज्येन च सः प्रभूतं धनं सम्पादितवान् आसीत् । तस्मिन् ग्रामे प्रायः निर्धनाः एव अधिकाः सन्ति । यदा धनस्य आवश्यकता भवति तदा तैः प्रसादः एव आश्रयणीयः भवति स्म । अतः तत्र प्रसादस्य अधिकारः निरङ्कुशः आसीत् । तस्य वचनं तिरस्कर्तुं कस्यापि धैर्यं न आसीत् ।

धनम् अधिकारः इत्यादयः मानवस्य स्वभावान् परिवर्तयन्ति इति वयं जानीमः एव । प्रसादस्य विषये एतत् अवितथं जातम् । दिनेषु गतेषु तस्मिन् अहङ्कारः प्रवृद्धः । सः ग्रामस्य जनानाम् आवश्यकतानां पूरणे सर्वथा आदरहीनः जातः । 'ग्रामस्य बालकाः यदि शिक्षणं प्राप्नुयुः तर्हि मम सर्वाधिकारः विनश्येत्' इति चिन्तयन् सः विद्यालयव्यवस्थाविषये उपेक्षां दर्शयति स्म । नूतनः अध्यापकः विद्यालयम् आगच्छति चेत् तं तर्जयित्वा, तस्मिन् भीतिं जनयित्वा वा ततः प्रेषयति स्म सः ।



अथ कदाचित् सूरजः नाम कश्चन उत्साही तरुणः अध्यापकः तं ग्रामम् आगतवान् । सः कृष्णापुरनिवासी, प्रसादस्य भगिन्याः पुत्रः च । सः निश्चितवान् यत् मया उपायेन एव मातुलस्य दुराचाराः अन्यायव्यवहाराः च दूरीकरणीयाः इति ।

सूरजः भगिनीपुत्रः एव इत्यतः तं पीडयितुं न शक्तवान् प्रसादः । तं गृहम् आनाय्य सः अबोधयत् - ''एतस्मिन् कुग्रामे स्थित्वा किम् ? भवान् तु सुशिक्षितः । एतस्मिन् ग्रामे अध्यापनं यदि क्रियेत तर्हि दिनानि व्यर्थीकृतानि भवेयुः । भवता कूपमण्डूकेन न भवितव्यम् । नगरे उत्तमम् उद्योगम् अहं दापयिष्यामि'' इति ।

तदा सूरजः अवदत् - ''नगरे अध्यापनाय सुशिक्षिताः जनाः बहवः सज्जाः भवन्ति ।

किन्तु दूरस्थे कुग्रामे कार्यकरणाय कोऽपि न उत्सहते । अतः एव अत्र आगतं मया । ग्रामीणानां शिक्षणाय प्रयासः एव अद्य विशेषतः अपेक्ष्यते'' इति ।

एतत् श्रुत्वा प्रसादः यद्यपि असन्तुष्टः तथापि ताम् असन्तुष्टिं न प्रकाशितवान् सः ।

सूरजः ग्रामजनानां साहाय्येन जीर्णस्य विद्यालयस्य परिष्कारं कारितवान्, बालानां पाठनम् आरब्धवान् च । सायं रात्रौ वा सः वयस्कान् अपि पाठयति स्म । स्वावलम्बिताम् अपि बोधयति स्म सः । सर्वकारतः एतदर्थं कीदृशं साहाय्यं प्राप्तुं शक्यम् इत्यादिकम् अपि ज्ञाप्यते स्म तेन । तस्मात् ग्रामे अल्पे एव काले परिवर्तनम् आरब्धम् ।

एतत् प्रसादस्य क्रोधाय जातम् । ग्रामे मद्विषये आदरः क्षीयेत इति भीतिः तस्य । सूरजं ग्रामात् प्रेषयितुम् इच्छन् सः कदाचित् सायङ्काले विद्यालयसमीपं गतवान् । तदवसरे सूरजः बालान् बोधयन् आसीत् । तत् बोधनं प्रसादस्य कर्णयोः अपि पतितम् ।

''निसर्गे परिवर्तनं सदा भवति अस्माकं हस्तक्षेपं विनैव । किन्तु जीवने परिवर्तनं तु प्रयत्नात् एव भवितुम् अर्हति, न तु सहजतया । यः प्राप्तस्य अवसरस्य उपयोगं चिन्तयति सः विकासं प्राप्तुम् अर्हति । किन्तु एतदर्थं योग्यः परिश्रमः तु करणीयः भवति । ये न परिश्राम्यन्ति ते विकासं प्राप्तुं न अर्हन्ति । यैः प्रगतिः साधिता तैः प्रगतिम् असाधितवताम् उद्धाराय प्रयासः करणीयः । ते उदाराः स्युः । द्वेषासूयादीन् दुर्गुणान् परित्यजेयुः'' इति वदन् सूरजः बालान् कर्तव्यं बोधयन् आसीत् ।



तस्य कथनं वास्तविकं विवेकपूर्णं च आसीत् । तस्य श्रवणात् प्रसादस्य मनः परिवृत्तं जातम् । सः अग्रे गत्वा सूरजम् अवदत् – ''सूरज ! भवान् वयसा अल्पः सन् अपि महामेधावी । मयि विवेकः जागरितः भवता । यानि कार्याणि मया करणीयानि तानि कुर्वन् भवान् एव ग्रामाधिकारी भवितुमर्हः'' इति ।

''मातुलवर्य ! भवति यत् परिवर्तनं मया प्रतीक्षितम् आसीत् तत् अद्य सिद्धम् । एतस्य ग्रामस्य अधिकारी भवान् एव । ग्रामीणानाम् आवश्यकतायाः पूर्त्यै कार्यं कुर्वता भवता उत्तमा कीर्तिः प्राप्तव्या । श्वः मया रङ्गपुरं प्रति गम्यते'' इति अवदत् सूरजः ।

***– प्रवीणा, आन्ध्रप्रदेशः***



# धनपिशाचः

धनपालः नाम कश्चित् हस्तपुरे निवसति स्म । धनमोहग्रस्तः सः महाकृपणः आसीत् । कुसीदवाणिज्येन प्रभूतं धनं सम्पादितम् आसीत् तेन ।

कदाचित् ऋणस्य प्रतिसङ्ग्रहाय सः कश्चित् ग्रामम् अगच्छत् । प्रत्यागमनसमये अन्धकारः प्रसृतः आसीत् । तथापि सः स्वग्रामं प्रति प्रस्थितवान् । मध्येमार्गं कश्चन अश्वशकटः तत्समीपम् आगतः । शाकटिकः धनपालम् अभिज्ञाय अवदत् - ''धनपालवर्य ! एकं रूप्यकं दत्तं चेत् अहं भवन्तं ग्रामं सकुशलं प्रापयिष्यामि'' इति ।

तदा धनपालः अवदत् - ''किं धन-व्ययेन ? पादाभ्यां गमने सामर्थ्यम् अस्ति एव मम । वेगेन अहं भवतः अश्वम् अपि पराजितं कुर्याम्'' इति ।

''रूप्यकमितस्य धनस्य व्यये अपि नास्ति भवतः मनः । एतस्मिन् परिसरे पिशाचाः वसन्ति इति ज्ञायते खलु भवता ?'' इति अवदत् शाकटिकः धनपाले भीतेः जननाय ।

किन्तु धनपालः एतस्मात् न भीतः । सः पादाभ्यां गमनम् अनुवर्तितवान् । कौमुदी तु आसीत् एव । अतः मार्गः स्पष्टतया दृश्यते स्म । तस्मात् धनपालः धैर्येण अग्रे गतवान् ।

किञ्चिद्दूरं यदा गतं तदा कश्चन प्राचीनः वटवृक्षः दृष्टः । तस्य पार्श्वे जीर्णं गृहम् अपि दृष्टम् । यदा धनपालः तत्समीपम् आगतः तदा गृहस्य पुरतः स्थितः कश्चन वृद्धः अपृच्छत् - ''अपि कुशलं धनपाल ?'' इति ।

धनपालः तम् आश्चर्येण पश्यन् अपृच्छत् - ''इतः पूर्वं दृष्टपूर्वः तु न भवान् । भवतः नाम किम् ?'' इति ।

''अहं भवतः प्रपितामहस्य प्रपितामहः अस्मि'' इति अवदत् सः वृद्धः ।

''मम प्रपितामहः तु मम जन्मनः पूर्वम् एव दिवं गतः । तस्य प्रपितामहः कथं सजीवं

स्थातुम् अर्हेत् ?'' इति पृष्ट्वा क्षणकालं विचिन्त्य भीतिम् अनुभवन् धनपालः पुनः अपृच्छत् – ''मम प्रपितामहस्य प्रपितामहः भवान् पिशाचः तु न खलु ?'' इति ।

''सम्यक् एव तर्कितं भवता धनपाल ! अहं पिशाचः एव । तथापि मत्तः न कापि भीतिः भवतः । भवति मम महती प्रीतिः । मया जीवितकाले या सम्पत्तिः रक्षिता आसीत् ताम् अहं भवते दातुम् इच्छामि'' इति अवदत् पिशाचः ।

''कियत् धनम् अस्ति भवत्समीपे ?'' इति अपृच्छत् धनपालः ।

''प्रभूतम् । मम नाम प्रकाशः इति । भवतः यावती सम्पत्तिः ततोऽपि अधिका सम्पत्तिः अस्ति मम । मम पुत्रपौत्रादयः व्ययविषये अवधानवन्तः न आसन् । प्रभूतं व्ययं कुर्वन्ति स्म, महता प्रमाणेन दानम् अपि कुर्वन्ति स्म । एतत् सोढुम् अशक्नुवन् अहं तान् गृहात् निष्कासितवान् । एतस्मात् धनव्ययः अपगतः । मरणानन्तरम् अपि तां सम्पत्तिम् अहं रक्षामि स्म । एषु दिनेषु मया ज्ञातं यत् भवान् मद्वंशीयः इति । व्ययविषये आवयोः समानं चिन्तनम् । अतः मम सम्पत्तिम् अहं भवते दास्यामि । तेन सा सम्पत्तिः रक्षिता भविष्यति, वृद्धिदात्री अपि भविष्यति'' इति

सर्वं श्रद्धया श्रुत्वा सन्तोषम् अनुभूतवान् धनपालः । तदा पिशाचः पुनः अवदत् – ''सम्पत्तिः तु दास्यते मया । किन्तु तत्र कश्चन नियमः पालनीयः भविष्यति भवता'' इति ।

''मया पालनीयः सः नियमः कः ?'' इति पृष्टवान् धनपालः ।



''अहम् अपि अदृश्यरूपेण भवता सहैव स्थास्यामि । गृहस्य सर्वे व्यवहाराः मम इच्छायाः अनुगुणं प्रचलेयुः । अहं यत् वदामि तत् पालनीयं भवता'' इति अवदत् पिशाचः ।

धनाशाग्रस्तः धनपालः विशेषचिन्तनम् अकृत्वा एतं प्रस्तावम् अङ्गीकृतवान् । ततः पिशाचः स्वस्य समग्रां सम्पत्तिं धनपालाधीनाम् अकरोत् । धनपालस्य गृहस्य व्यवहारस्य निर्वहणं पिशाचाधीनं जातम् ।

तस्मात् गृहं नरकसदृशं जातम् । गृहे धनपालस्य माता, पत्नी, त्रयः पुत्राः, अन्ये केचन च निवसन्ति स्म । सर्वेषां भोजनाय यावान् तण्डुलः आवश्यकः तस्य चतुर्थांश-मात्रम् एव प्रतिदिनं दीयते स्म पिशाचेन । अतः सर्वैः यवागूः सेवनीया आपतिता । न स्वादः, न पौष्टिकता । उत्सवदिने भक्ष्यादि-



निर्माणम् अपि निषिद्धं जातम् ।

आहारादिविषये धनपालेन पूर्वम् एवं कठोरता न अनुस्त्रियते स्म । अकस्मात् तस्य व्यवहारे एवं परिवर्तनं किमर्थम् आगतम् इति न ज्ञातं गृहसदस्यैः ।

कदाचित् धनपालस्य दशवर्षीया पुत्री पार्वती अस्वस्था जाता । ''पुत्री पार्वती पार्श्व-ग्रामस्थस्य वैद्यस्य समीपं नेतव्या अस्ति । अतः किं पेटिकातः अहं किञ्चित् धनं स्वीकरवाणि ?'' इति पिशाचम् अपृच्छत् धनपालः ।

''न स्वीकरणीयं धनम् । ज्येष्ठाः वदन्ति - लङ्घनं परमौषधम् इति । अतः भवतः पुत्री उपवासम् आचरतु । तेन अस्वास्थ्यम् अपगतं भविष्यति'' इति अवदत् पिशाचः ।

''तस्याः अस्वास्थ्यं तीव्रम् अस्ति । अल्पा अपि उपेक्षा प्राणापायाय भवेत्'' इति आतङ्केन अवदत् धनपालः ।

''प्राणापायः अपि वरम् एव । पुत्र्यः सदा व्ययकारिण्यः भवन्ति । विवाहादिनिमित्तं क्रियमाणः व्ययः किम् अल्पः ? अतः सा प्राणैः वियुक्ता यदि भवेत् तर्हि महान् धन-सञ्चयः स्यात्'' इति हसन् अवदत् पिशाचः ।

पिशाचस्य एतत् निर्दयं वचनं श्रुत्वा धन-पालः नितरां दिग्भ्रान्तः ।

पुत्र्याः अस्वास्थ्यविषये पत्युः अनवधानतां दृष्ट्वा धनपालस्य पत्नी लक्ष्मीः नितरां कुपिता । पत्युः अनुपस्थितौ तया धनपेटिकायाः कुञ्चिका अन्विष्टा । तां प्राप्य पेटिकाम् उद्घाट्य धनं स्वीकृत्य पुत्रीं वैद्यसमीपं नीतवती सा । चिकित्साकारणतः प्राणापायभीतिः अपगता ।

पिशाचेन सन्देहः प्राप्तः यत् गृहे मम अनुज्ञां विना अपि कार्याणि प्रचलन्ति सन्ति इति । अतः सः समग्रं दिनं गृहे एव स्थित्वा सर्वं सुसूक्ष्मं परिशीलितवान् ।

धनपालः यदा गृहम् आगतः तदा पिशाचः अवदत् - ''भोः, गृहे किमेतत् प्रवर्तते इति जानातु'' इति ।

धनपालः सर्वं परिशीलितवान् । भस्म-लेह्य-कषायादीनां कूप्यः गृहे दृष्टाः । तावता लक्ष्मीः तत्र आगतवती । धनपालः ताम् अपृच्छत् - ''किमेतत् सर्वम् ?'' इति ।

''आम् । मया एव पेटिकाम् उद्घाट्य धनं स्वीकृत्य चिकित्सा कारिता । किम् एतत् अनुचितं जातम् ? यत् धनं गृहजनानां प्राण-रक्षणाय अपि न भवेत् तादृशेन धनेन किम् ? एषु दिनेषु पूर्णोदरं भोजनम् अपि न प्राप्यते

अस्माभिः । एवं चेत् आत्महत्या एव शरणं स्यात् अस्माकम्'' इति अश्रूणि स्रावयन्ती क्रोधेन अवदत् लक्ष्मीः ।

धनपालः किमपि उत्तरम् अनुक्त्वा ततः निर्गतः । रात्रौ निद्रा अपि न प्राप्ता तेन । समग्रां रात्रिं यावत् चिन्तनं कृतं तेन । प्रातः सः किमपि निर्णीय पेटिकातः किञ्चित् धनं निष्कास्य पत्न्यै दत्त्वा - ''लक्ष्मि ! एतत् धनं स्वीकरोतु तावत् । गृहाय यद्यत् आवश्यकं तत्सर्वम् आनयतु । पुत्र्याः चिकित्सां कारयन्त्या भवत्या सा रक्षिता । भवत्या अहं क्षन्तव्यः । बालानां कापि न्यूनता यथा न स्यात् तथा व्यवस्था क्रियताम्'' इति अवदत् ।

पिशाचः एतत्सर्वं पश्यन् आसीत् । सः धनपालं क्रोधेन अवदत् - ''भवता नियमस्य भङ्गः कृतः'' इति ।

''अहं तु वणिक् । नियमस्य पालने वणिजः बद्धादराः न भवन्ति'' इति धैर्येण अवदत् धनपालः ।

''अस्माकं भाविनी परम्परा सम्पद्युक्ता भवेत् इति मम अपेक्षा आसीत् । तदर्थम् एव मया धनस्य सञ्चयः कृतः । सञ्चितस्य धनस्य उपयोगः आरब्धः चेत् धनस्य वृद्धिः कथं स्यात् ? भवता भिक्षुकत्वं प्राप्येत'' इति तर्जन-स्वरेण अवदत् पिशाचः ।

''मम का गतिः स्यात् इति तु कालः एव निर्णेष्यति । पेटिकायां प्रभूतं धनं संरक्षितं चेत् कः लाभः ? गृहजनाः अपि यदि मरणं प्राप्नुयुः तर्हि किं धनेन ? धननिमित्तं भवता पुत्रपौत्रादयः अपि गृहात् निष्कासिताः । तस्मात् जीवने प्रेमानुरागादयः भवतः जीवने विलुप्ताः जाताः । मरणानन्तरं धनमोहकारणतः भवता दीर्घकालीनं पिशाचजन्म प्राप्तम् । भवतः एतां दुरवस्थां पश्यता मया निर्णीतम् अस्ति यत् मया एतादृशी दुर्गतिः न प्राप्तव्या इति । धनमेव सर्वस्वं न । गृहजनानां प्रीत्यादरादयः अपि जीवने भवेयुः'' इति आवेशेन अवदत् धनपालः ।

क्षणं विचिन्त्य पिशाचः - ''धनपाल ! भवता मम नेत्रोन्मीलनं कृतम् । भवतः वचनं सत्यम् । गृहजनानां यथा, तथा अन्येषाम् अपि साहाय्यं कुर्वन् सुखेन जीवतु भवान् । पिशाचत्वं तु सर्वथा मास्तु'' इति उक्त्वा ततः अदृश्यतां गतः ।



# अपूर्वं शौर्यप्रदर्शनम्

षष्ठस्य मुगलचक्रवर्तिनः औरङ्गजेबस्य (१६५९-१७०७) सुहृदः विरलाः एव भवन्ति स्म । किन्तु राजनीतिकारणतः विविध-राजानां मैत्रीं तु सः सम्पादयति स्म ।

राजस्थानं किञ्चन सुसमृद्धं राज्यम् । तस्य राज्यस्य आधीन्ये स्थितं जोधपुरं वशीकर्तुम् इच्छति स्म औरङ्गजेबः । किन्तु यशवन्तसिंहः तस्य इच्छायाः पूरणे कण्टकायते स्म ।

कदाचित् महाराजः यशवन्तसिंहः पुत्रेण पृथ्वीसिंहेन सह आगराम् आगतवान् सौजन्य-मेलनं निमित्तीकृत्य । तदवसरे औरङ्गजेबः तौ राजोद्यानं नीतवान्, तत्रत्यानि वैशिष्ट्यानि



दर्शितवान् च । तस्मिन् उद्याने किञ्चन पञ्जरम् आसीत् । तस्मिन् आसीत् कश्चन क्रूरः बलवान् व्याघ्रः । निरन्तरं गर्जन् सः द्रष्टृषु भयं जनयति स्म, स्वामिनः औरङ्गजेबस्य ख्यातिं ख्यापयति स्म च । किन्तु एतत् दृष्ट्वा अपि यशवन्तसिंहः विशेषाश्चर्यं कुतूहलं वा न प्रदर्शितवान् ।

''महाराज ! किम् एतादृशः व्याघ्रः भवता अन्यत्र कुत्रापि दृष्टः ? एतस्य सामान्यं गर्जनम् अपि धीरस्य अपि जनस्य हृदये कम्पं जनयति'' इति साभिमानम् अवदत् औरङ्गजेबः ।

यशवन्तसिंहः सकृत् उपेक्षया तं व्याघ्रं दृष्ट्वा अवदत् - ''चक्रवर्तिवर्य ! किम् अस्ति एतस्य वैशिष्ट्यम् ? मम राज्ये बालाः अपि एतादृशैः व्याघ्रैः सह क्रीडन्ति बहुधा'' इति ।

''एवम् ?'' इति अवदत् चक्रवर्ती ।

''अथ किम् ? किं मम वचने विश्वासः नास्ति भवतः ?'' इति अपृच्छत् राजा यशवन्तसिंहः ।

औरङ्गजेबः उपहासपूर्वकं हसन् अवदत् - ''सर्वथा विश्वासानर्हम् एतत् । किं भवतः राज्ये तादृशः वीरः कोऽपि स्यात्, यश्च एतस्य व्याघ्रस्य पुच्छं वा स्पृष्ट्वा सजीवं स्थातुं शक्नुयात् ?'' इति ।

''कुतो न ? सन्ति एव तादृशाः'' इति उक्त्वा यशवन्तसिंहः स्वस्य पुत्रं पृथ्वीसिंहं साकूतम् अपश्यत् ।

युवराजः पृथ्वीसिंहः झटिति एव पितुः भावम् अवगत्य पञ्जरसमीपं गत्वा धैर्येण तस्य द्वारम् उद्घाट्य अन्तः गतवान् । क्रुद्धः व्याघ्रः आक्रमणाय अग्रे आगतः । युवराजः तम् उरसि प्रहृत्य भूमौ अपातयत् लीलया । औरङ्गजेबः अत्र विश्वसितुम् अशक्नुवन् कुतूहलेन सर्वं पश्यन् अतिष्ठत् । पृथ्वीसिंहः विशेषपरिश्रमं विनैव तं व्याघ्रं भूमौ अपातयत्, येन सः पुनः न उत्तिष्ठेत् । व्याघ्रस्य मरणं निश्चित्य सः पञ्जरतः बहिः आगतवान् । तस्य शरीरतः रक्तधारा निर्गच्छति स्म ।

विच्छायवदनः औरङ्गजेबः अनिच्छया एव तस्य धैर्यं प्रशंसितवान्, पितुः आज्ञायाः पालने दर्शितां विधेयतां तदीयां शक्तिं च स्तुतवान् । यशवन्तसिंहः पुत्रं शिबिरं प्रति प्रेषितवान् चिकित्सायै । युवराजः अचिरात् एव स्वास्थ्यं प्राप्तवान् ।

एतदनन्तरम् अपि औरङ्गजेबस्य दर्पव्यवहारः न अपगतः । भाविनि काले सः विश्वासघातं कुर्वन् तं युवराजं मारितवान् यत् सा तु अन्या एव कथा ।

## चतुर्थ्याः चन्दमामाप्रश्नावल्याः उत्तराणि

१. राज्ञः नाम सुनीलः इति । राजा चोरश्च इत्येतस्यां कथायाम् ।
२. विभीषणः इति ।
३. नवम्बर्मासे २० तमे दिनाङ्के १९८९ तमे वर्षे ।
४. २७ व्याघ्राभयारण्यानि ।
५. विश्वासघातः ।
६. व्लाडिमीरः वृद्धा च ।



# रक्तिः विरक्तिः च

विश्वेश्वरपुरं कश्चन विशालः ग्रामः । तस्मिन् ग्रामे कदाचित् भगवद्गीतासप्ताहः आचर्यमाणः आसीत् । ग्रामजनाः सर्वेऽपि आ सप्ताहात् वेदान्तिनः त्रिपाठिवर्यस्य प्रवचनं शृण्वन्तः भक्तिसागरे मग्नाः आसन् । कार्यक्रमस्य अन्तिमे दिने सर्वान् उद्दिश्य – ''भवतां मध्ये भवितुम् सप्ताहात्मकः एव समयः प्राप्तः मया । अन्यत्र एतदर्थम् एव गन्तव्यम् अस्ति । मोक्षप्राप्तये निरन्तरं येन प्रयासः विधीयते तस्य एव जन्म सार्थकतां याति । तदर्थं मार्गदर्शकः कश्चन समर्थः गुरुः आवश्यकः । तादृशः गुरुः दैवसमानः भवति । मम हार्दा अपेक्षा अस्ति यत् भवद्भिः तादृशः कश्चन गुरुः प्राप्तः भवतु इति । अधुना अहम् इतः गमनाय अनुज्ञां प्रार्थये'' इति उक्तवान् त्रिपाठिवर्यः ।

ग्रामीणैः प्रवचनं कृतवतः तस्य सत्कारः कृतः । महता सन्तोषेण तस्य आप्रच्छनं प्रवृत्तम् अपि ।

मङ्गलः भवानीप्रसादः च तस्य एव ग्रामस्य भूस्वामिनौ । तौ उभौ अपि प्रवचनं श्रुत्वा गृहं प्रति प्रस्थितौ । मार्गे भावावेशेन मङ्गलः भवानीप्रसादम् अवदत् – ''त्रिपाठिमहोदयः महाविद्वान् अस्ति । तस्य वैदुष्यपूर्णं प्रवचनं पारमार्थिकं ज्ञानं प्रददत् अत्युत्तमम् आसीत्'' इति ।

''आम् सत्यम् । वस्तुतः सः सरस्वतीपुत्रः अस्ति'' इति प्रत्यवदत् भवानीप्रसादः ।

''प्रवचनं श्रुतवति मयि स्थिता काचित् न्यूनता मां बहुधा बाधमाना अस्ति । तस्याः निवारणाय कञ्चित् गुरुम् अन्वेष्टुं तस्य चरणकमलयोः मम जीवनं समर्पयितुं च अहम् इच्छामि । कतिपयदिवसान् भवान् मम कृषिकार्यं निर्वहन् गृहं संरक्षितुं यदि शक्नुयात् तर्हि अहं समर्थस्य गुरोः अन्वेषणार्थं प्रस्थानं कुर्याम् । किं भवान् एतत् अङ्गीकुर्यात् ? किं

मम गमनम् अनुमन्येत भवान् ?'' इति ।

''भवतः साहाय्यकरणे कोऽपि क्लेशः नास्ति एव मम । किन्तु सुष्ठु चिन्तनं क्रियतां यत् गुरोः अन्वेषणस्य का आवश्यकता इति । अपि च लब्धः गुरुः समर्थः वा न वा इति निर्णयः न हि सुकरः । यः तादृशं निर्णयं कर्तुं समर्थः तस्य जीवने गुरोः आवश्यकता एव न भवति इति चिन्तयामि अहम् । विषयेऽस्मिन् सम्यक् विचिन्त्य अग्रिमं निर्णयं करोतु भवान्'' इति अवदत् भवानीप्रसादः ।

''सम्यक् विचिन्त्य एव निर्णीतं मया । मया श्रुतं यत् प्रयागक्षेत्रसमीपे कश्चित् महात्मा अस्ति इति । सः वायौ डयते, जलस्य उपरि भ्रमति, अग्निं प्रविश्य बहिः आगच्छति च इति श्रूयते । दिवा भक्तजनैः सह तिष्ठन् सः रात्रौ अदृश्यः सन् हिमाद्रिं गत्वा तपः अनुतिष्ठति इत्यपि श्रुतं मया । अतः अहमपि तस्य महात्मनः सान्निध्यं प्राप्तुम् इच्छामि । तेन सह जीवन् अहमपि जीवितं धन्यं कर्तुम् इच्छामि'' इति उक्तवान् मङ्गलः ।

मङ्गलस्य मनसि किम् अस्ति इति स्पष्टतया ज्ञातं भवानीप्रसादेन । अनुरोधेन एतस्य गमनं निवारयितुं न शक्यते इति मत्वा भवानीप्रसादः उक्तवान् - ''भवता गमनं तु निश्चितम् एव । एवं स्थिते अहं यत्किमपि कथयेयं चेदपि न किमपि प्रयोजनम् । अतः निश्चिन्तः सन् गत्वा आगच्छतु भवान् । अहं भगवन्तं प्रार्थयामि यत् अचिरात् एव भवता कश्चित् साधुः समर्थः गुरुः प्राप्तः भवेत्, भवतः उद्धारः च भवेत् इति'' इति ।

ततः मङ्गलः प्रस्थाय प्रयागं गत्वा स्वामिनः



आश्रमं गतवान् । तत्र सः अपश्यत् महान्तं भक्तसम्मर्दम् । तस्य दर्शनात् सः रोमाञ्चितः अभवत् । शिष्यैः मङ्गलस्य आगमनस्य वार्ता प्रापिता गुरुं प्रति । ततः मङ्गलः अन्यैः शिष्यैः सह गुरोः प्रकोष्ठं प्रविष्टवान् ।

गुरोः दर्शनस्य समनन्तरम् एव मङ्गलस्य मुखात् स्वगतं वचनं निर्गतम् - ''अहो ! एतस्य मुखमण्डले कीदृशं दिव्यं तेजः !'' इति । सः स्वामिनः पादयोः न्यपतत् ।

''उत्तिष्ठ मङ्गल ! भवान् कैश्चित् बन्धनैः बद्धः अस्ति । ततः मुक्तिप्राप्तये कञ्चित् कालं भवता तपः अनुष्ठेयं भविष्यति । तदनन्तरं यत् इष्यते तत् प्राप्तुं शक्यते भवता । हरिः ओम् । तत्सत् '' इति वदन् सः महात्मा आशीर्भिः अन्वगृह्णात् ।

''अहो, महत् आश्चर्यम् एतत् । भवान्



सर्वज्ञः एव । मदीयं सर्वं ज्ञातं भवता । अस्मात् जन्मनः मोचयतु माम्'' इति विज्ञप्तिपूर्वकं प्रार्थितवान् मङ्गलः ।

हसन्मुखतां धरन् गुरुः - ''इदं सर्वं भगवदधीनम् । पश्यतु मङ्गल ! त्वयि वैराग्य-भावः वर्धेत । स्वीकरोतु एतं प्रसादं, श्रद्धया सेवतां च'' इति उक्त्वा रिक्तहस्तं वायौ प्रासारयत् ।

सर्वेषु पश्यत्सु तस्य हस्ते सीताफलम् आगतम् । तत् मङ्गलाय दत्तवान् सः ।

दिग्भ्रान्तः सन् फलम् अखादत् मङ्गलः । तस्मिन् बहवः सङ्कल्पाः जागरिताः ।

गृहात् बहिः मङ्गलस्य आगमनस्य अनन्तरं मासषट्कम् अतीतम् । मङ्गलः कुत्र गतः, इदानीं सः किं करोति इत्यादिकं ग्रामे कोऽपि न जानाति स्म । अतः तस्य विषये बहुधा किंवदन्त्यः प्रसृताः । केषाञ्चन कथनं 'सः हिमालये तपसि मग्नः' इति । अन्येषां कथनम् आसीत् - 'सः विरागी जातः' इति ।

अतः तस्य पत्नी पुत्री च अत्यन्तं चिन्ताक्रान्ते जाते । वराक्यौ ते किं वा कुर्याताम् ? भवानीप्रसादः एव आधारः आसीत् तयोः । सः एव तयोः धैर्यं पूरयित्वा सान्त्वयति स्म ।

कदाचित् मङ्गलः पत्न्याः नाम्ना, मित्राय च एकैकं पत्रं प्रेषितवान् । गृहसदस्येभ्यः लिखिते पत्रे एवं लिखितम् आसीत् - 'अधुना अहं नित्यानन्दाश्रमे अस्मि । गुरुणा अहम् उक्तः अस्मि यत् भवबन्धनेभ्यः यः मोक्षम् इच्छति सः गृहजनेभ्यः दूरं तिष्ठेत् इति । अहं तु तेन निर्दिष्टं प्रशान्तजीवनम् एव कर्तुम् इच्छामि । गृहसदस्यानां कष्टं न भवेत् इति धिया भूमेः एकरत्रयमितां भूमिं गृहं च भवद्भ्यः अर्पयिष्यामि । अवशिष्टं विक्रीय अत्रैव स्थिरतया स्थास्यामि । अतः विक्रयण-व्यवस्थां भवन्तः कुर्वन्तु । अहं तत्र आगत्य धनराशिं गृहीत्वा प्रतिगमिष्यामि' इति ।

एतत् पत्रं पठित्वा मङ्गलस्य पत्नी पुत्री च दिग्भ्रान्ते भूत्वा रोदनं कुर्वत्यौ भवानीप्रसादस्य गृहम् आगतवत्यौ । भवानीप्रसादः ते उभे अपि सान्त्वयित्वा आगमनकारणं ज्ञात्वा अवदत् - ''समस्यानिवारणार्थम् अहं कञ्चित् उपायं वदामि । अहं यथा वदामि तथा क्रियताम्'' इति ।

मङ्गलस्य पत्न्या पुत्र्या च एतत् अङ्गीकृतम् । ततः भवानीप्रसादः तत् पत्रद्वयं स्वीकृत्य ग्रामाधिकारिणः समीपं गतवान् । इतः पूर्वम् एव मङ्गलविषये सर्वं श्रुतवान् आसीत् ग्रामाधि-

कारी । पत्रद्वयं पठित्वा सः भवानीप्रसादेन सह विशदतया चर्चाम् अकरोत् ।

ततः मासानन्तरं निराशः निस्तेजस्कः सन् ग्रामं प्रत्यागतवान् मङ्गलः साक्षात् ग्रामाधिकारिणः गृहं गत्वा तेन मिलित्वा उक्तवान् - ''महोदय ! घोरम् अन्याय्यं कृतम् अस्ति भवानीप्रसादेन । महावञ्चना एषा । अहं पूर्णतः लुण्ठितः अभवम् । मम समग्रा सम्पत्तिः स्वायत्तीकृता अस्ति भवानीप्रसादेन । मद्गृहसदस्याः निर्गतिकाः कृताः तेन । सः महान्तं विश्वासघातम् आचरितवान् । यथाशीघ्रं ग्रामसभा आयोज्यताम् । तत्र सः आहूयताम् । समुचितं विचारणं कृत्वा सः च महादुष्टः दण्ड्यताम्'' इति ।

तदा ग्रामाधिकारी किमपि अजानन् इव अपृच्छत् - ''तादृशं किम् अन्याय्यं प्रवृत्तम् ? कः विश्वासघातः कृतः भवानीप्रसादेन ? भवतः अभियोगः कः ?'' इति पृष्टवान् ।

''गुरोः अन्वेषणाय गमनात् पूर्वम् अहं भवानीप्रसादम् उक्तवान् आसं यत् मम प्रत्यागमनपर्यन्तं मम सम्पत्तेः परिवारस्य च संरक्षणं भवता करणीयम् इति । वञ्चकेन तेन मामकीना समग्रा सम्पद् स्वायत्तीकृता अस्ति । इतोऽपि महत् कुकृत्यं किं स्यात् ?'' इति उक्तवान् मङ्गलः आवेशमिश्रितेन स्वरेण ।

''एवम् ! अवश्यम् अस्य कृते प्रतिक्रिया भविष्यति । किन्तु भवतः गुरुणा कः उपदेशः प्रदत्तः इति आदौ कथयतु'' इति उक्तवान् ग्रामाधिकारी ।

''भवबन्धनेभ्यः भवान् बहिः आगच्छति चेत् अहं भवते मोक्षमार्गं दर्शयिष्यामि इति



उक्तम् अस्ति गुरुणा'' इति उक्तवान् मङ्गलः ।

''कीदृशं भवबन्धनम् अस्ति भवतः ?'' इति पृष्टवान् ग्रामाधिकारी ।

''भवबन्धनं नाम पत्नी गृहं सम्पत् मित्रम् इत्यादिषु आसक्तिः'' इति अवदत् मङ्गलः ।

''भवता पत्रे लिखितम् आसीत् - मयि वैराग्यम् उत्पन्नम् अस्ति इति, भवबन्धनं मया भञ्जितम् इति च । एवं तर्हि एषः ममकारः कुतः भवतः ? गुरोः सान्निध्ये तिष्ठन् भवान् भगवतः नामजपे मग्नः भवतु । तदा मोक्षः लप्स्यते'' इति अवदत् ग्रामाधिकारी ।

तदा मङ्गलः उक्तवान् - ''मम गुरुः उक्तवान् अस्ति यत् सम्पूर्णकार्यसमाप्तिपर्यन्तं प्रत्यागमनं मास्तु इति । अतः यावत् मदीया सम्पत्तिः मया न प्राप्यते तावत् कथं भवितुम् अर्हति मम प्रतिगमनम् ?'' इति ।

तदा ग्रामाधिकारी उच्चैः हसन् अवदत् – ''भवानीप्रसादसमीपे भवत्सम्पत्तिविक्रयण-व्यवहारसम्बद्धानि पत्राणि सन्ति । ततः स्पष्टं यत् सम्पत्तिः भवानीप्रसादस्य एव इति । इदानीं तम् अत्र आह्वयामि'' इति ।

''तेन वञ्चनया निर्मापितानि तानि अवास्तविकानि'' इति क्रोधेन अवदत् मङ्गलः ।

''भवान् वदन् अस्ति – मत्कृते किमपि न आवश्यकम् मोक्षादृते इति । एवं स्थिते किमर्थं भवान् पुनः एतादृशे जाले पतितुम् इच्छति ?'' इति गम्भीरस्वरेण पृष्टवान् ग्रामाधिकारी ।

''न किमपि अपेक्ष्यते इति मया कदा उक्तम् ? सम्पदः विक्रयणात् यत् धनं प्राप्येत तत् प्राप्तुम् एव अहम् आगतवान् अस्मि'' इति मङ्गलः अवदत् स्वसमर्थनं कुर्वन् ।

''मङ्गल । किम् इच्छति भवान् ? परिवारम् उत सम्पत्तिम् ? गुरुम् उत तेन निर्दिश्यमानं मोक्षम् ? स्त्रियां यावत् वैराग्यं दृश्यते तावदपि न दृश्यते भवति'' इति उपहासपूर्वकम् अवदत् ग्रामाधिकारी ।

तेन पृष्टेषु प्रश्नेषु निहितं रहस्यं झटिति अवगतं मङ्गलेन । सः अञ्जलिबद्धः सन् ग्रामाधिकारिणम् अवदत् – ''श्रीमन् ! इदानीम् अवगतं यत् मया कीदृशः दोषः आचरितः इति । क्षन्तव्यः अहम्'' इति वदन् ग्रामाधिकारिणः पादयोः पतितवान् ।

ग्रामाधिकारी तं प्रेम्णा उत्थाप्य – ''भवान् स्वदोषम् अङ्गीकृतवान् इत्येतत् तु महते सन्तोषाय । भवति परिवर्तनम् आनेतुम् एव अस्माभिः एतत् नाटकं कृतम् । भवतः परिवारस्य सम्पत्तेः वा कापि हानिः न जाता'' इति उक्त्वा तं प्रकोष्ठस्य अन्तः नीतवान् ग्रामाधिकारी । तत्र पत्नीपुत्र्यादयः भवानीप्रसादः च तम् एव प्रतीक्षमाणाः स्थिताः आसन् ।

मङ्गलम् आलिङ्ग्य भवानीप्रसादः अवदत् – ''मया पूर्वम् एव उक्तम् आसीत् यत् गुरोः अन्वेषणादिकं मास्तु इति । किन्तु भवान् तदा तत् श्रोतुं सिद्धः न आसीत् । यः भवतः अपेक्षाः पूर्णाः करोति, भवत्तः यः किमपि न अपेक्षते सः एव गुरुः भवितुम् अर्हति, न अन्यः'' इति ।

मङ्गलः लज्जया शिरः अवनमय्य मौनेन अतिष्ठत् ।



# चन्दमामाप्रश्नावली - ६

Co-sponsored by
Infosys FOUNDATION,
Bangalore

य: समुचितम् उत्तरं दास्यति स: अर्हति रू. २५०/ - पारितोषिकत्वेन*

**अत्र ये प्रश्नाः भवन्ति तेषाम् उत्तराणि गतवर्षस्य (२००५) द्वादशसु सञ्चिकासु शीर्षकेषु कथासु वा सन्ति । यत् पठितं तस्य स्मरणतः उत्तरम् अविलम्बेन प्राप्यते । यदि न स्मर्येत तर्हि गतस्य वर्षस्य द्वादश अङ्कान् पुरतः संस्थाप्य पृष्ठेषु परिशील्य उत्तरं प्राप्यतां लीलया । आम्, लीलाविषयः एव अस्ति अयम् ।**

** एकाधिकजनाः यदि समुचितम् उत्तरं प्रेषयेयुः तर्हि तेषु पञ्च जनान् यादृच्छिकतया चित्वा तेषु पारितोषिकधनं वितीर्यते ।*

एवं क्रियतां भवद्भिः - १. उत्तराणि लेखनीयानि । २. नाम, वयः, (ऊनषोडशवर्षीयाः एव अत्र भागं वोढुम् अर्हाः) सङ्केतं (पिन्कोड्सहितम्) च प्रेषयन्तु । ३. एकस्य कुटुम्बस्य एकः एव सदस्यः अत्र भागं वोढुम् अर्हति । ४. पिहितपत्रस्य उपरि चन्दमामाप्रश्नावली - ६ इति लेखनीयम् । ५. जुलैसमाप्तितः पूर्वम् उत्तराणि अस्माभिः प्राप्तव्यानि । ६. सप्टम्बरमासे परिणामः प्रकाशयिष्यते ।

१. 'व्याघ्रस्य मुखरोम्णां सङ्ग्रहे यत् धैर्यं चातुर्यं च प्रदर्शितं तदेव धैर्यं चातुर्यं च पुत्रविषये दर्शनीयं भवता । तदा भवान् निश्चयेन विजयं प्राप्नुयात्' इत्येतत् मुनेः वचनं पालयन् राजा पुत्रविषये प्रेम्णा आदरेण च व्यवहरन् पुत्रम् अध्याप्य योग्यं जनं कृतवान् । सः राजा कः ? तस्य प्रस्तावः कस्यां कथायाम् अस्ति ?

२. जगति एव सुविख्यातम् अतिप्राचीनं तैलशुद्धीकरण-केन्द्रम् अस्मद्देशे कुत्र अस्ति ?

३. अकबरेण यदा सिंहासनम् आरूढं तदा तदीयं वयः किम् आसीत् ?

४. दक्षिणाधित्यकासु स्थितासु नदीषु दीर्घतमा का ?

५. जागतिकाहारदिनं कस्मिन् दिने आचर्यते ?

६. गजल्गीतप्रकारस्य जन्मभूमिः का ?

७. काङ्ग्रेस्-अध्यक्षपदम् आरूढवान् प्रथमः मुसलमानः कः ?

८. एतत् चित्रं कस्याः कथायाः ?





# अमृतस्य अन्वेषणम्

ब्रह्मदत्तः यदा काशीराज्यं पालयन् आसीत् तदा सामन्तस्य चिरायुषः आस्थाने नागार्जुननाम्ना मुख्यमन्त्रिस्थानं विभूषितवान् आसीत् बोधिसत्त्वः ।

नागार्जुनः दयालुः महादाता च । रसायनशास्त्रे औषधविज्ञानक्षेत्रे च पारं गतः अपि आसीत् सः । सः रसायनप्रयोगद्वारा रहस्ययोगं कञ्चित् आविष्कृत्य राज्ञः स्वस्य च मरणसम्भवं निवारितवान् ।

कदाचित् तदीयः प्रियः पुत्रः सोमदेवः अल्पे एव वयसि आकस्मिकतया मरणं प्राप्तवान् । एतस्मात् नागार्जुनः महत् दुःखं प्राप्तवान् ।

स तु स्वभावेन दयामयः आसीत् । अतः सः अचिन्तयत् – 'एतत् मरणं सहजतया बान्धवानां दुःखस्य कारणं भवति । प्रियः जनः यदा मरणं प्राप्नोति तदा जनाः बहुधा विलपन्ति । मरणस्य निवारणाय कमपि मार्गं न जानन्ति ते । किन्तु तत् सोढुम् अपि सामर्थ्यं न भवति तेषाम् । अतः यदि एतत् मरणम् एव निवार्येत तर्हि कस्यापि दुःखं न भवेत् । अतः मरणनिवारणाय मया कोऽपि उपायः चिन्तनीयः' इति ।

किञ्चित् चिन्तनं यदा कृतं तदा तस्य मनसि विचारः आगतः – 'रसायनप्रयोगः अधिकव्ययकारी । अतः सामान्यानां जनानाम् उपयोगाय मया किमपि करणीयम् । मूलादीनां साहाय्येन अमृतं मया निर्मातव्यम् । तदा एव सामान्याः जनाः कष्टानि निवारयितुं मार्गं प्राप्नुयुः' इति ।

एवं विचिन्त्य सः विविधानाम् औषधानां सहयोगेन अमृतस्य निर्माणाय प्रयत्नम् आरब्धवान् । स्वस्य समग्रं शास्त्रज्ञानं, बुद्धिमत्तां च उपयुज्य सः बहुविधान् प्रयोगान् कृतवान् । अन्तिमः घट्टः अपि तेन प्राप्तः । अमृतकल्पनामकं मूलं प्राप्तं चेत् इष्टं सिद्धम्

इव इति सः अचिन्तयत् ।

अत्रान्तरे एषा वार्ता इन्द्रेण श्रुता । इन्द्रः अश्विनीदेवते आहूय अवदत् - ''भवन्तौ अद्यैव भूलोकं गत्वा नागार्जुनस्य 'अमृत-योग'स्य पूर्णतां स्थगयताम् । साम-दान-दण्ड-भेदेषु कस्यचित् वा उपयोगः क्रियताम् । तदीयं कार्यं स्थगितं भवेत् । अग्रिमं परिणामम् अहं चिन्तयिष्यामि'' इति ।

एताम् आज्ञां पालयन्तौ अश्विनीकुमारौ वेषान्तरं धृत्वा भूलोकं गतवन्तौ । नागार्जुन-समीपं गत्वा कुशलप्रश्नादिकं पृष्ट्वा तौ अवदताम् - ''मन्त्रिवर ! राज्यशासनम् एव अन्यथाकर्तुम् अपि समर्थेन भवता अविदितं किम् अस्ति ? एतादृशः भवान् ब्रह्मणः सङ्कल्पम् एव विरोद्धुं प्रयतमानः अस्ति यत् तत् तु महते आश्चर्याय । मानवजातेः धर्मगतिः भवति मृत्युः । अमृतसिद्धिद्वारा सः एव भवता अवरुद्धः यदि भवेत् तर्हि किं सृष्टिनियमाः विपर्यस्ताः न भवेयुः ? यदि मानवेषु कस्यापि मरणम् एव न भवेत् तर्हि मानववासाय कियन्तः लोकाः अपेक्षिताः भवेयुः ! देवैः यत् कार्यं करणीयं तत् भवता क्रियते यत् तत् किम् औचित्यम् आवहेत् ? भवतः पुत्रवियोगं निमित्तीकृत्य साहसकार्ये प्रवृत्तिः सर्वथा न शोभते'' इति ।

एतेषां वचनानां श्रवणात् अपि नागार्जुनस्य सङ्कल्पः शिथिलतां न गतः । किन्तु तस्य मनसि सन्देहः तु उत्पन्नः - मया क्रियमाणम् उचितम् उत न इति ।

अत्रान्तरे राजा चिरायुः पुत्रं जयसेनं युवराज-पदे नियोक्तुं सन्नाहम् आरब्धवान् । शुभे



मुहूर्ते आस्थानं सभासद्भिः पूर्णं जातम् ।

तदवसरे वृद्धब्राह्मणवेषेण आगतः इन्द्रः जयसेनसमीपं गत्वा रहसि अवदत् - ''वत्स ! भवतः पितुः मरणं वार्धकं वा नास्ति इति किं भवान् न जानाति ? अतः भवता आजीवनं युवराजत्वेन एव स्थातव्यं भविष्यति । सिंहासनं भवता कदापि न प्राप्स्यते'' इति ।

एतत् श्रुतवतः जयसेनस्य मुखं म्लानं जातम् । तदा वृद्धब्राह्मणरूपी इन्द्रः पुनः अवदत् - ''वत्स ! भवता एतद्विषये चिन्ता करणीया नास्ति । भवतः इच्छायाः पूर्त्यै अस्ति कश्चन सरलः उपायः । भोजनात् पूर्वं यः यत् याचति तत् तस्मै ददाति सः । आ बहोः कालात् तेन पाल्यमानः नियमः एषः । अतः भवता तत्समीपं गत्वा तदीयं शिरः एव याचनीयम् । अग्रे यत् भविष्यति तद्विषये अहं

चिन्तयिष्यामि'' इति ।

राज्यलोभेन आक्रान्तः जयसेनः तस्मिन् एव दिने भोजनात् पूर्वं नागार्जुनसमीपं गत्वा वृद्धस्य आदेशस्य अनुगुणं तदीयं शिरः अयाचत । एतत् श्रुतवान् नागार्जुनः पनुश्चिन्तनं किमपि अकुर्वन् जयसेनाय खड्गं दत्त्वा अवदत् - ''वत्स ! अलं भीत्या । भवान् एतेन खड्गेन मम शिरः कर्तयतु तावत्'' इति ।

रसायनस्य प्रभावस्य कारणतः नागार्जुनस्य शिरः वज्रसमं जातम् आसीत् । अतः जयसेनः बहुवारं खड्गेन बलात् प्रहारं कृतवान् चेदपि नागार्जुनस्य शिरः तु कर्तितं न जातम् ।

एतां वार्तां ज्ञातवान् राजा धावन् आगत्य पुत्रस्य प्रयत्नस्य निवारणाय उद्युक्तः । तदा नागार्जुनः अवदत् - ''महाराज ! युवराजेन या अपेक्षा प्रकटिता तस्याः पूर्वापरादिकम् अहं सम्यक् जानामि । जयसेनः तु प्रवर्तिष्य-माणस्य निमित्तमात्रम् । अतः मया तस्य प्रयत्नस्य निरोधः न कृतः । पुर्वेषु जन्मसु मया नवनवतिवारं निराकरणं विनैव शिरसः कर्तनम् अङ्गीकृतम् आसीत् । एषः तु शततमः अवसरः । एतदवसरे किमर्थं वा मया निरा-करणं प्रदर्श्येत ? अहम् अपयशसः भाजनं भवितुं न इच्छामि । कृपया भवता अत्र सह-करणीयम्'' इति ।

एतावत् उक्त्वा सः राजानम् अन्तिमतया प्रीत्या आलिङ्गितवान् । ततः स्वस्य स्यूततः किञ्चन मूलम् अपनीय ततः रसम् उत्पाद्य तेन रसेन खड्गं विलिप्य सः जयसेनम् अवदत् - ''वत्स ! इदानीं भवान् मम शिरः कर्तयितुम् अर्हति'' इति ।

जयसेनेन पुनरपि यदा खड्गेन प्रहारः कृतः तदा नागार्जुनस्य मुण्डं रुण्डात् पृथग्भूतं सत् भूमौ अपतत् ।

एतत् घोरं दृश्यं द्रष्टुम् अशक्नुवन् राजा अपि प्राणत्यागाय सन्नद्धः जातः । तदा भूमौ पतितात् शिरस्तः ध्वनिः श्रुतः - ''राजन् ! अलं चिन्तया । सर्वेषु अपि जन्मसु अहं भवता सह भविष्यामि'' इति ।

एतदनन्तरं राजा पूर्णतः विरक्तः जातः । सः राज्यभारं पुत्राय अर्पयित्वा तपस्यार्थम् अरण्यं प्रति निर्गतवान् ।

एवं जयसेनेन राज्यं प्राप्तम् । इन्द्रस्य तन्त्रं च सफलं जातम् ।





# रामायणम्

“राम: वनं यथा गच्छेत्, भरतस्य राज्याभिषेकश्च यथा भवेत् तथा कञ्चन मार्गम् अहं सूचयामि । यथा अहं वदामि तथा क्रियते चेत् भवत्याः महान् लाभः भविष्यति” इति उक्त्वा मन्थरा उपाय-निरूपणम् आरब्धवती –

“पूर्वं कदाचित् सुरासुरयोः युद्धे देवानां साहाय्याय भवत्याः पतिः गतः आसीत् । पत्या सह भवती अपि आसीत् । दण्डकारण्ये मत्स्यध्वजराज्ये शम्बरनामकं बलशालिनं राक्षसं विरुध्य युध्यमानः भवत्याः पतिः व्रणितः सन् मूर्च्छितः जातः । तं भवती ततः दूरं नीत्वा तस्य प्राणानां रक्षणं कृतवती । अचिरात् एव सचेतनतां प्राप्तवान् दशरथः तुष्टः सन् अवदत् यत् भवत्यै वरं ददामि, अपेक्षितं याचतु इति । तदा भवत्या उक्तम् आसीत् यत् इदानीम् अहं किमपि न इच्छामि, अग्रे कदाचित् याचिष्ये अपेक्षितं वरम् इति । अधुना वरयाचनाय समयः आगतः अस्ति । चतुर्दश वर्षाणि यावत् वनं प्रति रामस्य प्रेषणं, पुत्रस्य भरतस्य राज्याभिषेकं च वरत्वेन भवती याचतु” इति ।

कैकेय्याः स्वभावः उत्तमः एव । तथापि मन्थरायाः एतेन उपदेशेन तस्याः मनः दूषितम् अभवत् ।

मन्थरा कैकेय्याः निर्मले मानससरोवरे तृष्णातरङ्गान् उत्पादितवती, तृष्णानिवारणस्य मार्गम् अपि सूचितवती ।

कैकेय्या मन्थरा उक्ता – “अये कुब्जे ! भवती वस्तुतः बुद्धिमती एव अस्ति । यथा भवत्या मम हितं चिन्त्यते तथा न केनापि क्रियते” इति ।



ततः प्रतिफलरूपेण सर्वाणि आभूषणानि निष्कास्य सा दत्तवती तस्यै । अनन्तरं सा छिन्नां शाटिकां धृत्वा कोपगृहं प्रविश्य कटस्य उपरि शयितवती ।

शयितां तां मन्थरा अवदत् - ''यदा भवत्याः पतिः भवतीं द्रष्टुम् आगमिष्यति तदा विना विरामं रोदनं क्रियताम् । राजा भवत्याः शोकं क्रोधं वा न सहते । यतः तस्य प्रिया पत्नी अस्ति भवती । भवत्याः दुःखस्य निवारणाय प्राणान् अपि पणीकरोति सः । रत्नानि वज्राणि वा दास्यामि इति आदौ वदेत् एव सः । तथापि भवत्या तु रोदनात् कथमपि न विरमणीयम् । वरप्राप्तिपर्यन्तं भवती दृढमनस्का भवेत् । चतुर्दश वर्षाणि यदि भरतः सिंहासनम् अधितिष्ठेत् तर्हि ततः तं निष्कासयितुं कोऽपि न शक्नुयात् । तावता जनाः अपि भरते प्रीतिमन्तः आदरवन्तः च भविष्यन्ति । अतः चतुर्दशानां वर्षाणाम् अनन्तरं रामः अयोध्यां प्रत्यागत्य अपि किमपि साधयितुं न अर्हेत्'' इति ।

'शम्बरासुरात् अपि भवती एव नितरां चतुरतरा अस्ति' इति तस्याः श्लाघनं कृतवती कैकेयी ।

तया निर्णीतं यत् दशरथः मम वरं न यदि अनुमन्येत तर्हि आत्महत्यां करिष्यामि इति तं वदिष्यामि इति ।

दशरथः रामस्य पट्टाभिषेकम् आज्ञप्य तां वार्तां कैकेयीं वक्तुं स्वयमेव अतःपुरं प्रविष्टवान् ।

तत्र ताम् अदृष्ट्वा सः - ''कैकेयि ! भवती क्व ?'' इति उच्चैः आहूतवान् । उत्तरं किमपि न प्राप्तं तेन ।

ततः बहिः आगत्य सः द्वारपालकं पृष्टवान् - ''कैकेयी कुत्र ?'' इति ।

बद्धाञ्जलिना तेन सेवकेन उक्तं - ''प्रभो ! सा कोपगृहं गतवती अस्ति इति भाति'' इति ।

आश्चर्यचकितः दशरथः झटिति कोपगृहं प्रति गतवान् । तत्र कटे शयानां कैकेयीं सः अपश्यत् ।

बहुमूल्यानि अपि बहूनि आभूषणानि तत्र भूमौ तथा विकीर्णानि आसन् यथा आकाशे रात्रिकाले विविधानि नक्षत्राणि विकीर्णानि भवेयुः ।

ताम् उपसर्प्य दशरथः प्रीत्या पृष्टवान् - ''किमर्थं भवती क्रुद्धा दृश्यते ? कस्मै क्रुध्यति भवती ? केनापि किं तर्जितम् ? किं केनापि अपमाननं कृतम् ? भवत्याः स्वास्थ्यं समीचीनं

नास्ति किम् ? किम् अहं वैद्यान् आनयानि ? निरपराधाय अपि दण्डनं दास्यामि यदि भवती अपेक्षेत । निर्धनम् अपि धनिनं करिष्यामि भवती इच्छति चेत् । किमर्थं रोदनं भवत्याः ? कृपया उत्तिष्ठतु भवती । मम प्राणान् पणीकृत्य वा भवत्याः इच्छाम् अहं पूरयिष्यामि'' इति ।

एतत् श्रुत्वा - ''अहं न केनापि अपकृता, न वा अपमानिता । मम काचित् अपेक्षा अस्ति । तस्याः पूरणाय भवान् प्रतिजानीते चेत् अहं सन्तुष्टा भवेयम् । प्रतिज्ञा क्रियेत चेदेव ताम् अहं भवन्तं वदिष्यामि'' इति उक्तवती कैकेयी ।



एतत् श्रुत्वा दशरथः सकृत् हसित्वा तस्याः वेणीं हस्तेन गृहीत्वा - ''कैकेयि ! अहं प्राणसमानस्य रामस्य नाम्ना शपे यत् भवत्याः अपेक्षाम् अवश्यं पूरयिष्यामि इति । किमर्थं मयि भवत्याः अविश्वासः यत् अहं भवत्याः इच्छां न पूरयेयम् इति ? किं मया इतः पूर्वं कदापि एवं कृतम् ? न खलु ?'' इति वदन् तस्याः प्रार्थनायाः पुरस्कारं प्रतिज्ञातवान् ।

ततः कैकेयी शम्बरयुद्धं, ततः कृतं तदीयं रक्षणं, वरयाचनप्रसङ्गं च तं स्मारयित्वा उक्तवती - ''मम वरद्वयं वर्तते । प्रथमं तावत् मम औरसस्य पुत्रस्य भरतस्य एव पट्टाभिषेकः अचिरात् एव भवेत् इति । द्वितीयं च सः रामः सकलं राजवैभवं परित्यज्य वल्कलानि धृत्वा चतुर्दश वर्षाणि अरण्ये यापयेत् इति'' इति ।

एतां विचित्राम् अपेक्षां श्रुत्वा तडिता ताडितः इव स्तम्भीभूतः अभवत् राजा । का प्राची, का च प्रतीची इति क्षणं यावत् तेन न ज्ञातम् ।

सः कैकेयीं बहुधा निन्दन् - ''भवतीं राजकुमारीं मत्वा अहम् अन्तःपुरम् आनीतवान् । इदनीं भवती विषसर्पिणी जाता अस्ति । भवतीं मातरं मन्यते रामः । तथापि तस्य विषये एतादृशः व्यवहारः किमर्थं भवत्याः ? तेन किम् अपराद्धम् ? किमर्थं भवती तं वनं प्रति प्रेषयितुम् इच्छति ? आग्रहं त्यक्त्वा अपेक्षा परिवर्त्यताम् । भरते मम प्रीतिः अस्ति उत न इति ज्ञातुमेव एवं करोति भवती । रामेण भवत्याः यावती सेवा कृता तस्याः चतुर्थांश-मात्रम् अपि भरतेन कृतं न स्यात् । भवत्याः वचनानि मयि पीडां जनयन्ति । वयसा वृद्धोऽहं यदाकदाचिदपि इहलोकयात्रां समापयेयम् । अपेक्ष्यते चेत् समग्रं जगत् एव



भवती स्वी-करोतु । किन्तु रामाय मा क्रुध्यतु'' इति बहुधा प्रार्थितवान् ।

यथा यथा दशरथस्य दैन्यप्रार्थना अधिका जाता तथा तथा कैकेय्याः क्रोधः अपि वर्ध-मानः जातः ।

''आदौ वरं ददामि इति आश्वास्य प्रतिज्ञाय च तदनन्तरं तस्य अपालनं न उचितम् । राज-वंशस्य एव कलङ्काय एतत् । मम अपेक्षा यदि पूरिता न भवेत् तर्हि अहम् आत्महत्यां करिष्यामि'' इति उक्तवती कैकेयी दृढस्वरेण एव ।

दशरथः मानसिकव्यथाग्निना दग्धः इव अभवत् । 'अहो, कीदृशी विषमा स्थितिः एषा ! पुत्र ! भवान् वने वसेत् इति कथं रामम् अहं वदेयम् ? कैकेय्याः इच्छानुसारं यदि रामस्य पट्टाभिषेकः स्थगितः भवेत् तर्हि अन्ये राजानः किं कथयेयुः ? महता वैभवेन यस्य रामस्य पट्टाभिषेकोत्सवः आचरणीयः सः कथम् अरण्यं प्रति प्रेषितः इति किं मां न पृच्छेयुः ते ? दशरथस्य मतिः विकला जाता अस्ति इति किं न उपहसेयुः ते ? कौसल्यायाः मुखम् अहं कथं पश्येयम् ?' इत्येवं चिन्तयन् दशरथः बहुधा दुःखम् अनुभूतवान् ।

सः कैकेयीं बहुधा धिक्कृतवान्, निन्दित-वान्, अन्ते निस्संज्ञः सन् प्रलपितवान् अपि । एवं सा रात्रिः महता कष्टेन एव यापिता तेन । वस्तुतः सा रात्रिः प्रलयरात्रिवत् प्रतीयते स्म ।

वसिष्ठः शिष्यैः सह राजभवनं प्रविशन् अन्तःपुरद्वारे सुमन्त्रम् अपश्यत् ।

सः तम् अवदत् - ''पट्टाभिषेकस्य सर्वाः सज्जताः समाप्ताः । राज्ञः आगमनस्य अनु-क्षणम् एव अग्रिमस्य कार्यक्रमस्य आरम्भः'' इति ।

एतं सन्देशं प्रापयितुं सुमन्त्रः राजनिकटं गच्छन् केनापि न अवरुद्धः । यतः सः महाराजस्य बाल्यसुहृद् आसीत् ।

अन्तःपुरं प्रविश्य राजसमीपे उपस्थितः अभवत् सः । राजा तत्र शयितः दृष्टः तेन । राज्ञः मानसिकस्थितिः न अवगता आसीत् खलु तेन ? तेन तर्कितं - राजा स्वपन् स्यात् इति ।

अतः तेन उक्तम् - ''महाराज ! जागरणं प्राप्यताम् । सूर्योदयः जातः अस्ति । रामस्य पट्टाभिषेकं सर्वे अपि प्रतीक्षन्ते । भवतः आगमनमात्रम् अवशिष्टम् अस्ति इदानीम्'' इति ।

शोकहेतोः दशरथस्य नेत्रे नितरां रक्ते जाते

आस्ताम् ।

सः सुमन्त्रं पश्यन् विषादेन – "मित्र ! एवं कथनेन मां किमर्थं सन्तापयति भवान् ?" इति पृष्टवान् ।

एतत् श्रुत्वा तस्य स्थितिं झटिति अवगत्य सुमन्त्रः तं प्रणम्य पदद्वयं प्रतिगतः ।

दशरथः सम्भाषणस्थितौ नासीत् इत्यतः कैकेयी अवदत् – "सुमन्त्र ! प्रातः श्रीराम-पट्टाभिषेकः भविष्यति इति सन्तोषम् अनुभवन् आरात्रि सः निद्रां नालभत । इदमिदानीमेव सुप्तः सः । भवान् गत्वा रामं सूचयतु यत् अविलम्बेन अत्र आगन्तव्यम् इति । इदं राजाज्ञां मन्यताम्" इति ।

रामम् उद्दिश्य प्रायः आन्तरङ्गिकं किमपि राज्ञा वक्तव्यं स्यात् इति चिन्तयन् ततः निर्गतवान् सुमन्त्रः ।

वीथीषु उत्साहतरङ्गाः प्रसृताः आसन् । राजभवनं तु प्रजाभिः पूर्णम् आसीत् । सर्वविधाः सन्नाहाः पूर्णाः आसन् । राजानः अस्मिन् प्रसङ्गे उपहारीकर्तुं सज्जाः सन्तः मुहूर्तं प्रतीक्षमाणाः अचिन्तयन् यत् महाराजः दृष्टिपथं नायाति क्वापि, वयम् उपस्थिताः इति सः कथं सूचनीयः इति ।

सुमन्त्रः तान् सर्वान् सकृत् अवलोक्य अवदत् – "भवताम् आगमनम् अहं राजानं सूचयिष्यामि । इदानीं मया रामः तत्समीपं नीयते" इति ।

ततः राज्ञः अतःपुरं प्रविश्य सः दशरथम् अवदत् – "प्रभो ! विजयोऽस्तु । प्रातःकालः आसन्नः । जागर्तु भवान् । नगरस्य गण्याः,



अधिकारिणः, धनिकवरेण्याः इत्यादयः सर्वे भवद्दर्शनकामाः प्रतीक्षन्ते । कार्यताम् अग्रिमं कार्यम्'' इति ।

तदा दशरथः तम् उद्दिश्य अवदत् – ''रामः अविलम्बेन आहूयताम् अत्र इति खलु आज्ञापितं कैकेय्या ? रामं विना एव भवान् कथम् अत्र आगतः ? तस्याः आज्ञा मम आज्ञा नास्ति किम् ? अहं स्वपन् नास्मि । जागरितः एव अस्मि । शीघ्रं गत्वा भवान् रामेण सह आगच्छतु'' इति ।

सुमन्त्रः दशरथं नमस्कृत्य – ''अत्र कापि अन्या एव सज्जता क्रियमाणा अस्ति इति प्रतीयते'' इति स्वगतं वदन् ततः निर्गतः ।

महतीं दिग्भ्रान्तिम् अनुभवन् सः रामभवनं प्रति प्रस्थितः ।

मार्गेषु जनानां सम्मर्दः दृश्यते स्म । रामभवनस्य चतसृषु दिक्षु राजानः सैनिकाः मन्त्रिणः च स्थिताः आसन् ।

सुमन्त्रः सर्वान् वारयन् रामस्य भवनं प्रविष्टवान् । आगमनसूचनां प्रेषयित्वा अनुज्ञां प्राप्य सः रामनिकटं गतवान् ।

रामः अलङ्कृतः सन् एव सुमन्त्रेण सह प्रस्थितवान् । सिंहचर्मावृते रथे उपविष्टं रामम् अनुसृतवान् लक्ष्मणः अपि । एकेन हस्तेन छत्रं गृहीत्वा अपरेण व्यजनं चालयन् अवर्तत सः ।

सहस्रशः जनाः, अलङ्कृताः अनेके राजानः च शोभायात्रारूपेण रामस्य अनुसरणम् अकुर्वन् । सम्मर्दपूर्णे मार्गे श्रूयते स्म – 'सः एव रामः । अद्य एतस्य एव पट्टाभिषेकः भविष्यति' इति ।

रामस्य रथः दशरथस्य भवनस्य पुरतः अतिष्ठत् प्राकारत्रयं क्रान्त्वा । रामः अन्तःपुरं प्रविष्टवान् ।

एकस्मिन् सुन्दरे आसने कैकेयी दशरथः च अपविष्टौ आस्ताम् ।

रामेण तयोः पादौ स्पृष्टौ । 'राम ...' इत्येतावत् एव वक्तुं शक्तं दशरथेन । इतोऽपि अधिकं किमपि वक्तुम् इच्छति स्म सः । किन्तु तदीयः कण्ठः अवरुद्धः अभवत् । दृष्टिः मन्दा जाता । निरन्तरम् अश्रूणि स्रवन्ति स्म तदीयाभ्यां नेत्राभ्याम् । किमपि वक्तुं सर्वथा अशक्तः सः स्वस्य मुखम् अन्यस्यां दिशि अकरोत् ।





# लावण्यवती लवङ्गलता

पूर्वसमुद्रस्य मध्यभागे सुवर्णद्वीपो नाम कश्चन द्वीपः आसीत् । तस्य द्वीपस्य राज्ञः नाम धीमान् इति । तस्य पुत्री लवङ्गलता न केवलं सुन्दरी, अपि तु नाट्ये सङ्गीते चित्रकलायाम् ऐन्द्रजाले चापि सुनिपुणा आसीत् । यदा सा प्राप्तवयस्का जाता तदा राज्ञः मनसि तस्याः विवाहचिन्ता आरब्धा ।

राज्ञा धीमता पुत्र्याः स्वयंवरस्य व्यवस्था कारिता । बहवः राजकुमाराः तत्र उपस्थिताः । किन्तु तेषु न कमपि अवृणोत् सा । तदा राजा धीमान् पुत्रीं पृष्टवान् – ''किम् उपस्थितेषु एतेषु कोऽपि भवत्यै न अरोचत ? भवत्याः अन्तरङ्गे किम् अस्ति ?'' इति ।

तदा लज्जमानया लवङ्गलतया उक्तम् – ''श्रूयते यत् रत्नद्वीपस्य राजा शशाङ्कः सुन्दरः साहसी बुद्धिमान् च इति । मम हितैषिणीनां सखीनाम् अभिलाषः यत् सः एव मम योग्यः पतिः अस्ति इति'' इति ।

''पूर्वम् एव विषयोऽयम् उक्तः यदि स्यात् तर्हि वरम् अभविष्यत्'' इति उक्त्वा राजा मन्त्रिभिः सह एतद्विषये चर्चां कृतवान् ।

सागरमार्गेण सुवर्णद्वीपतः रत्नद्वीपं प्रति गमनाय मासत्रयात्मकः कालः आवश्यकः आसीत् । अतः मन्त्रिणः अवदन् – ''विवाहसम्बन्धविषये शशाङ्कस्य अभिप्रायः आदौ ज्ञातव्यः । अतः दूतद्वारा राजकुमार्याः भावचित्रं प्रापयाम । तेन सह पत्रवाहकम् एकं कपोतम् अपि प्रेषयाम, येन तस्य आशयस्य ज्ञाने वयं शीघ्रमेव शक्ताः भवेम'' इति ।

मन्त्रिणः वचनानुसारम् एव राजा उपहारयुक्तं कञ्चन दूतं प्रेषितवान् रत्नद्वीपं प्रति । तेन सह सन्देशवाहकम् एकं कपोतं, लवङ्गलतायाः चित्रं चापि प्रेषितवान् सः ।

प्रस्थानस्य पञ्चाशतः दिनानाम् अनन्तरं

पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा



कपोतेन प्रत्यागत्य शशाङ्कस्य सन्देशः प्रापितः ।

''अहं राजकीयकार्येषु व्यस्तः अस्मि । सम्प्रति सुवर्णद्वीपं प्रति आगन्तुं न शक्नोमि । अतः लवङ्गलता एव रत्नद्वीपं प्रति आगमिष्यति चेत् विषयेऽस्मिन् कश्चन निर्णयः कर्तुं शक्यः'' इति पत्रे लिखितवान् आसीत् शशाङ्कः ।

विवाहात् पूर्वमेव वरस्य गृहं प्रति वध्वाः प्रेषणं पद्धतेः परम्परायाः च उल्लङ्घनाय एव आसीत्, तथापि राजा धीमान् नियमोल्लङ्घनाय सिद्धः अभवत् । काञ्चित् महानौकाम् उपहारैः सज्जीकृत्य सः पुत्रीं, राजपुरोहितं च प्रेषितवान् रत्नद्वीपं प्रति ।

प्रस्थितायाः नौकायाः मासः अतीतः । यावत् रत्नद्वीपः आसन्नः तावता सागर-लुण्ठाकाः तां नौकाम् आक्रान्तवन्तः । सुवर्ण-द्वीपस्य नौसेनया धैर्येण एव ते लुण्ठाकाः यद्यपि सम्मुखीकृताः तथापि तैः पराजयः एव प्राप्तः । लुण्ठाकाः नौकाम् आरूढवन्तः ।

अनया घटनया नितरां कम्पमाना जाता लवङ्गलता । सा आत्मरक्षणाय कृष्णवर्णेन कृत्स्नं शरीरं लेपितवती । एवं लेपितः वर्णः पञ्चदश दिनानि यावत् सर्वथा अपसारयितुम् अशक्यः आसीत् । स्वस्य नीलान् केशान् कर्तयित्वा सा नाविकवेषं धृतवती । राज-पुरोहितेन सह सा अपि रज्जूनां राशेः पृष्ठतः निलीय उपविष्टवती ।

लुण्ठाकाः नौकालुण्ठनं कृत्वा गमनसमये तदधोभागे रन्ध्रं कृत्वा पलायनम् अकुर्वन् । अतः रन्ध्रमार्गेण जलं प्रविष्टम् । नौका सागरे निमग्ना जाता । नौकायां स्थिताः सर्वे मृताः ।

नौकायां स्थितस्य कस्यचन उडुपस्य कारणतः उभौ नाविकौ सजीवं स्थितौ आस्ताम् । संज्ञां प्राप्तवन्तौ तौ ततः रत्नद्वीपं प्राप्तवन्तौ राजपुरोहितलवङ्गलताभ्यां सह ।

राजपुरोहितः लवङ्गलता च सैनिकाभ्यां सह राजधान्यां गच्छन्तौ कयाचित् रजिकया मिलितौ । प्रवृत्तं सर्वं श्रुत्वा सा रजिका तान् स्वस्य गृहं नीतवती । 'आगमनोद्देशसिद्धिपर्यन्तं अत्रैव वासं कर्तुम् अर्हन्ति भवन्तः' इति वदन्ती सा तेषां कृते वासव्यवस्थां कल्पितवती ।

तस्मिन् एव दिने राजगुरुः रत्नद्वीपराजेन शशाङ्केन मिलित्वा लवङ्गलतायाः आगमन-वार्तां सूचितवान् । शिबिकां प्रेषयित्वा तस्याः आनयनव्यवस्थां कारितवान् शशाङ्कः । रजिका लवङ्गलतायै उत्तमानि वस्त्राणि दत्त-वती । तानि धृत्वा लवङ्गलता शशाङ्कं द्रष्टुं

गतवती । किन्तु शशाङ्कः लवङ्गलतां दृष्ट्वा विमुखः अभवत् । राजवंशे एतादृश्यः अपि जायन्ते इत्यत्र विश्वसितुम् एव न शक्तवान् सः वञ्चिकां मत्वा तां ततः बहिः प्रेषितवान् । निराशा सा रजकगृहम् आगत-वती । रजिकया राजकुमार्याः सान्त्वनं कृतम् । रजिका काञ्चित् मालाकारीं जानाति स्म । तस्याः निकटे तादृशम् एकम् औषधम् आसीत् यस्य उपयोगेन अविलम्बेन केशाः प्रवृद्धाः भवेयुः । पञ्चदशसु एव दिनेषु लवङ्गलतायाः कृष्णता अपि दूरीकर्तुं शक्या आसीत् ।

राजभवनस्य कृते सुरमा पुष्पमालाः सज्जी-करोति स्म । पक्षाभ्यन्तरे एव राजकुमारी पूर्ववत् सुन्दरी जाता । किन्तु शशाङ्कराजस्य निकटं सा कथं प्रेषिता भवेत् ?

तदर्थं लवङ्गलतया कश्चन विशिष्टः उपायः आश्रितः । सा पुष्पमालाग्रथने कुशला आसीत् । शशाङ्कस्य कृते सा विशिष्टां मालां सज्जीकृतवती, राजनिकटं च प्रेषितवती च मालाकार्याः सुरमायाः द्वारा । तां मालां दृष्ट्वा नितराम् आश्चर्यं प्राप्तवान् शशाङ्कः माला-कारीम् अवदत् – ''अद्यपर्यन्तम् ईदृशी माला भवत्या ग्रथिता न आसीत्'' इति ।

''महाराज ! एषा न मया निर्मिता । भवदर्थम् एव कयाचित् युवत्या निर्मिता अस्ति एषा । एषा भवता अवश्यं धर्तव्या'' इति अकथयत् सुरमा ।

'' किं भवती मां तस्याः मालारचयित्र्याः समीपं नयेत् ? सा कथं मालारचनां करोति इति अहं द्रष्टुम् इच्छामि'' इति अवदत् शशाङ्कः ।



''महाप्रभो ! सा विचित्ररीत्या ग्रथनं करोति । सा भवतः नामानि जपन्ती पुष्पाणि मुखवायुना प्रेरयति । तदा तानि उड्डीय एकस्मिन् पात्रे पतन्ति । तस्मात् पात्रात् सा मालां निष्कासयति । एवंविधा माला केवलं भवदर्थम् एव भवति'' इति उक्तवती सुरमा ।

''एतत् तु महते आश्चर्याय । अहं तां द्रष्टुम् इच्छामि । किं भवती ताम् अत्र आनेतुं शक्नुयात् ?'' इति अपृच्छत् शशाङ्कः ।

गृहं गता सुरमा लवङ्गलताम् अवदत् - ''मम उपायः फलितः'' इति ।

एतदनन्तरं लवङ्गलता मल्लिकापुष्पाणि आनाय्य ततः अर्धभागं स्वीकृत्य मालां ग्रथितवती । ततः तां मालां स्थालिकायां संस्थाप्य सा माला दृष्टिपथं यथा न आगच्छेत् तथा अवशिष्टानि पुष्पाणि तदुपरि स्थापित-वती । ततः राजभवनदिशि तया प्रस्थितम् ।

तत्र गमनसमये सा तानि एव वस्त्राणि धृतवती, यानि शिबिकया गमनसमये धृतानि आसन् ।

लवङ्गलतायां शशाङ्कस्य दृष्टिः तथा निश्चला अतिष्ठत् यथा कस्मिंश्चित् प्रियतम-वस्तुनि दृष्टिः दृढा तिष्ठेत् । तस्मै सा नितराम् अरोचत । सा अपि राजतेजसा गाम्भीर्यभावेन च तेन सह समभाषत ।

''भवती मालां कथं रचयति ? दर्शयतु तावत्'' इति अवदत् शशाङ्कः ।

''मालानां रचनशक्तिः मयि न विद्यते । भगवान् एव मम कृते मालाः रचयति । तदपि तादृशस्य कृते एव, यस्य विषये मम हार्दः अभिमानः भवति'' इति अवदत् लवङ्ग-लता ।

''मत्कृते मालां न निर्माति किं भवती ?'' इति पृष्टवान् राज्ञः मन्त्री ।

''क्षन्तव्या अहम् । एतत् मया न शक्यते । भगवान् मम हृदयं जानाति । सः तत्कृते एव मालाः निर्मास्यति यस्मिन् मम अनुरागातिशयः भवति'' इति अवदत् लवङ्गलता ।

''एवं तर्हि मयि भवत्याः हार्दं प्रेम अस्ति किम् ?'' इति शशाङ्कः अपृच्छत् ।

''अयं तु भगवतः निर्णयः । एषः असत्यः कथं स्यात् ?'' इति अवदत् लवङ्ग-लता ।

''तर्हि इदं भगवता निर्णीतम् अस्ति इति भवती साधयतु'' इति उक्तवान् शशाङ्कः ।

ततः सा आत्मना आनीतां पुष्पस्थालिकां तस्मै दर्शितवती । तस्याम् ऊर्ध्वभागे मल्लिका-पुष्पाणि आसन् । तदनन्तरं सा रजतपात्रम् आनायितवती । स्वस्य स्थालिकायां स्थितानि पुष्पाणि तस्मिन् पात्रे पातयन्ती सा अधस्तन-मालाम् अपि पातितवती । पुष्पैः सह माला अपि दृष्टा तस्मिन् पात्रे ।

सा तां मालां शशाङ्कस्य कण्ठे अर्पितवती । शशाङ्कस्य मनसि अभासत – 'चित्रस्थायाः युवत्याः यावत् सौन्दर्यं ततोऽपि अधिकं सौन्दर्यम् एतस्याः' इति । एतं भावं शब्दैः अप्रकटयन् शशाङ्कः अपृच्छत् – ''अन्य-पुष्पाणां का गतिः ?'' इति ।

''महाराज ! क्षणं यावत् स्थीयते चेत् अहम् एतैः मालां रचयिष्यामि'' इति वदन्ती सुरमा अल्पे एव काले मालाम् अरचयत् । तां लवङ्गलताकण्ठे अधारयत् शशाङ्कः ।



चित्रम् - गान्धि अय्यः 4

# अपराजेयः गरुडः

राज्याभिषेकावसरे उपद्रवं कर्तुम्
उद्यतानाम् वनवासिनां स्थितिगतीः ज्ञातुं समुत्सुकः अस्ति
आदित्यः । अतः सः वृद्धं रामसिंहं वनवासिनाम् आवासक्षेत्रं प्रति
प्रेषयति । वनवासिदम्पतीभ्याम् आदित्यः सूच्यते - राजभवन-
सम्बन्धी कश्चित् बद्धः अस्ति इति ।















रामसिंहस्य अस्तित्वसङ्केतः न प्राप्तः । किन्तु पर्वतप्रदेशे...

कोऽपि वृक्षे बद्धः अस्ति । उभौ रक्षकौ अपि स्तः ।

आदित्यः बन्धिनः समीपं गच्छति । तस्य ऊहा सत्या अभवत् ।

रामसिंह ! मया त्वरया कार्यं करणीयं भविष्यति

अहम् आदित्यः अस्मि रामसिंह ! निश्शब्दं स्थीयताम् ।

भवतः बन्धनकर्तारः आगच्छन्तः सन्ति । मम अश्वम् आरुह्य पलायताम्, अस्मदीयाः च आनीयन्ताम् ।

भवतः किं भविष्यति ! श्रीमन् !

वनवासिनः जालं प्रक्षिपन्ति । आदित्यः अज्ञात्वा तेन बद्धः भवति ।

भवान् कः ? राजभवनस्य जनः कुत्र अस्ति ?

कश्चित् वनवासी कानिचन पर्णानि निष्पीड्य बलपूर्वकम् आदित्येन आघ्रापयति ।

इदानीं भवतु आनन्दः !

आह् ! मां त्यजत ! अहम् ....

आदित्यः संज्ञाशून्यः सन् पतति ।

सः कञ्चित् समयं यावत् उत्थातुं न शक्नोति ।

चलाम, अस्मन्नायकं सूचयित्वा आनयाम । सः एव वदिष्यति - अस्य दण्डनं कीदृशं भवेत् इति ।

रामसिंहः अङ्गरक्षकैः अश्वैः च सह तत्र प्रत्यागच्छति ।

महाभाग ! भवान् तु निष्पीडः खलु ? वनवासिनः भवन्तं न अबाधन्त खलु ? किन्तु ते कुत्र सन्ति ?

ते पर्णगन्धम् आघ्रापयन् । तेन अहं निश्चेतनः अभवम् । चलाम ! तेषाम् आगमनात् पूर्वम् इतः धावाम ।

प्रत्यागत्य स्ववासस्थाने ..

रामसिंह ! अधुना कथयतु ! कापि वार्ता किं लब्धा ?

केचन वितानकं निर्मान्तः दृष्टाः मया । मया तेषु सहभागी भूत्वा वार्तालापश्रवणम् आरब्धवान् । राज्याभिषेकशब्दं श्रुत्वा मया पृष्टं - ''कस्य राज्याभिषेकः ?'' इति बाह्यजनेन इव ।

ततः अग्रे किम् अभवत् ?

अकस्मात् प्रत्यभासत 'केनापि अभिज्ञातः अहम्' इति । सर्वे मां परिक्रम्य ''किं भवान् राजभवनजनः न ?'' इति पृष्टः तैः । ते वस्त्रेण मम नेत्रबन्दनं कृत्वा दीर्घसमयं यावत् चालितवन्तः । मया कश्चित् परिचितः कण्ठः तत्र ज्ञातः ।

कः आसीत् सः ? ऊहां करोतु ।


मया तर्कितं यत् सः रवीन्द्रदेवः भवेत् इति ।


सः वदन् आसीत् – मम शिरश्छेदनं कृत्वा राज्याभिषेकावसरे भवते उपहाररूपेण प्रेषणीयम् इति ।


मम चिन्तनक्रमः अपि सः एव आसीत् ।


किन्तु अस्माभिः एतादृशघटनाः अवरोद्धव्याः सन्ति ।




बलिदानस्य चर्चाविषये कस्यचित् शरीराङ्गस्य लब्धिसम्बद्धचमत्कारविषये च श्रुतम् अस्ति मया । यदि भवान् अनुमतिं दद्यात् तर्हि एतां वार्तां राजानं श्रावयामि । अवश्यं तस्मै विस्तृतविवरणं न ददामि, यतः सः चिन्ताग्रस्तः न भवेत् ।


केनापि नूतनम् अङ्गं प्राप्स्यते ? सः अवश्यं नरेन्द्रदेवः भवेत् ।


भोः रामसिंह ! राज्ञे अरुणायै च विस्तृतविवरणदानस्य आवश्यकता नास्ति ।


तदग्रिमदिने आदित्यः राज्ञा मिलति ।
राजगुरुणा भवान् स्मारितः अस्ति नित्यानुष्ठानविषये ।
मम दुर्घटनाविषयम् एतौ उभावपि न जानीतः इति तु वरम् एव ।


आदित्य ! भवता रामसिंहः रक्षितः । किन्तु तथाकरणे विपत् आसीत् ।
अनुवर्तते

निसर्गवैचित्र्यम्

# भयहेतुभूतानि पुष्पाणि



एतस्मिन् २००६ तमे वर्षे वेणुसस्यानि पुष्पितानि भविष्यन्ति । शते वर्षेषु एकवारम् एषा घटना आवर्तते इति श्रूयते । भारतस्य ईशान्यभागे स्थितेषु असम-त्रिपुरा-मिझोराम-मणिपुरादिषु राज्येषु एषः वेणुसस्यपुष्पोद्गमः द्रष्टुं शक्यः ।

वेणवः वस्तुतः तृणकुलीयाः । उन्नता अन्तस्साररहिताः वेणवः षष्टि वर्षाणि यावत् वर्धमानाः भवन्ति । ततः तेषु पुष्पोद्गमः जायते । भारते विंशतिविधाः वेणवः दृश्यन्ते प्रायः । वेणुपुष्पाणि प्रायः पीतवर्णीयानि तत्समीपवर्णोपेतानि वा भवन्ति ।

पुष्पितत्वप्राप्तेः अनन्तरं मूलसस्यं मृतं भवति । योग्यस्य वातावरणस्य प्राप्त्या भूमौ पतितानि तानि वेणुधान्यानि अङ्कुरितानि भवन्ति । पञ्चषेषु वर्षेषु नूतनानां वेणुसस्यानाम् उत्पत्तिः भवति । अग्रिमेषु उपदशेषु वर्षेषु सर्वत्र वेणुगुल्माः द्रष्टुं शक्याः । तेषां जीविताविधिः ५०-६० वर्षाणि ।

किमर्थं वेणुपुष्पाणि भयहेतुभूतानि भवन्ति ? यदा समाने काले सर्वे वेणुगुल्माः पुष्पिताः भवन्ति तदा महता प्रमाणेन धान्योत्पत्तिः भवति इति तु सत्यम् । किन्तु अनन्तरवर्षे तेषां दुर्लभता सम्पद्यते । वेणुधान्यानि दशंकुलीयानां प्रियः आहारः । वनप्रदेशे वेणुधान्यानां दुर्लभता यदा भवति तदा मूषकादयः कृषिक्षेत्राणि धान्यागाराणि प्रति वा गच्छन्ति । तेषां खादनतः आहारधान्यानि क्षयं यान्ति । अतः तत्परिसरे आहाराभवः परिदृश्यते । अतः एव जनानां विश्वासः यत् वेणवः पुष्पिताः भवन्ति चेत् क्षामः परिदृश्यते इति ।



केन्द्रसर्वकारेण एतस्मिन् वर्षे वेणुसस्यानां वर्धनाय, वेणुराहित्यं प्राप्नुवति क्षेत्रे पुनरपि वेणोः वर्धनाय च योजना सज्जीकृता अस्ति ।

केचन विज्ञानिनः अभिप्रयन्ति यत् वेणुपुष्पोद्गमः, क्षामस्य प्राप्तिः च काकतालीयन्यायेन आकस्मिकतया क्वचित् सम्भवति इति ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवदर्थकं विज्ञानम्



### महान्तः गोधिकाकुलीयाः जीविनः

भवन्तः कथापुस्तकादिषु महाकारिकाणां गोधिकानां विषये पठितवन्तः स्युः एव ।

कोमोडोनामिकाः गोधिकाः इण्डोनेशियादेशे कोमोडो-द्वीपे निवसन्ति । अल्पसङ्ख्यया ताः इण्डोनेषियादेशस्य अन्येषु अपि द्वीपेषु उपलभ्यन्ते । दशसहस्राधिकेभ्यः वर्षेभ्यः पूर्वम् एतादृशाः एव मेगालानियानामकाः जीविनः आस्ट्रेलियादेशे प्राप्यन्ते स्म । प्रथमजागतिकयुद्धावसरे केनचित् विमानचालकेन कोमोडोगोधिकानाम् अस्तित्वं ज्ञातम् । तासां जिह्वा मुखस्य अन्तः बहिः च सञ्चरन्ती आहारस्य ग्रहणे उपकरोति । दीर्घं सुदृढं च पुच्छं शत्रूणां प्रहारे अतिसमर्थम् । कोमोडोजीविनां मुखे सदा रोगाणवः वसन्ति । अतः तैः दष्टस्य जीविनः व्रणस्य तीव्रता अधिका भवति । एतस्य परिणामतः व्रणितः सः जीवी अचिरात् एव प्राणैः वियुक्तः भवति ।

कोमोडोजीविनः तरणे नितरां दक्षाः । स्थानीयभाषायाम् एतेषां नाम 'ओरा' इति । स्थानीयाः एतान् जलमकरान् भावयन्ति । जगति स्थितायां प्राचीनायां गोधिकाजातौ जाताः एते जीविनः प्राचीनतजातितया यथा तथैव आकारेण अपि सर्वान् जीविनः अतिशेरते ।



## भवतां परिसरः

### वाणिज्ये अग्नेः उपयोगः

वाणिज्ये अग्नेः उपयोगस्य विषये प्राचीनस्य कार्थेज्नामकस्य ग्रीकनगरस्य जनाः विशेषतः निपुणाः आसन् । प्रसिद्धः इतिहासज्ञः हेरोडोटसः वदति यत् ते समुद्रे नौकां स्थगयित्वा विक्रेतव्यानि वस्तूनि तीरे प्रसारयन्ति स्म । ततः नौकां गत्वा महान्तं धूमम् उत्पादयन्ति स्म । सा च धूमराजिः मैलुद्दूरात् अपि द्रष्टुं योग्या भवति स्म । सा क्रेतॄन् ज्ञापयति स्म यत् वाणिज्यनौका नौकास्थानं प्रति आगता अस्ति इति । जनाः नौकास्थानं प्रति आगत्य अपेक्षितस्य वस्तुनः मूल्यत्वेन सुवर्णं निक्षिप्य ततः अनतिदूरे अदृश्यतया तिष्ठन्ति स्म । नौकास्थाः वणिजः ग्रामीणैः स्थापितं सुवर्णं वस्तुनः मूल्यस्य अनुगुणम् अस्ति वा न वेति परीक्षन्ते स्म । यदि तत्र स्थापितं सुवर्णं तृप्तिजनकं तर्हि ते तत् स्वीकृत्य नौकां प्रति गच्छन्ति स्म । ततः ग्रामीणाः तत् वस्तु नयन्ति स्म ।

# पुटोऽयं भवताम् पुटोऽयं भवताम्

## भवन्तः जानन्ति किम् ?

### ध्वन्युत्पादकाः मीनाः



यदि गानशब्दस्य निर्वचनं चिन्त्येत तर्हि मत्स्याः गानसमर्थाः न इत्येव सिद्धं भवेत् । किन्तु एतत् तु सत्यं यत् जातिविशेषे जाताः मत्स्याः विशिष्टं किञ्चन ध्वनिम् उत्पादयितुं समर्थाः इति ।

मेडिटेरियन्समुद्रपरिसरे दृश्यमानः सिरेनूमत्स्यः स्वस्य दन्तान् आघर्षयन् सङ्गीतानुकारिणं ध्वनिम् उत्पादायितुं समर्थः ।

'आनकमत्स्यः' इति तु कस्यचन मत्स्यविशेषस्य नाम । सः आनकध्वनिम् अनुकर्तुं समर्थः इत्यतः एव तत् नाम तस्य । तेन उत्पाद्यमानः सः ध्वनिः तथा उच्चः भवति यत् ५० पादोन्नते ऊर्ध्वतले स्थितः अपि धीवरः तं स्पष्टतया श्रोतुम् अर्हति ।

## अभिवर्ध्यतां ज्ञानशक्तिः

**जागतिकी पादकन्दुकस्पर्धा जर्मन्देशे प्रचलति । भारतीयैः पादकन्दुकक्षेत्रे प्राप्तां सिद्धिं स्मारयन्ति अधस्तनाः प्रश्नाः ।**



२. भारतेन एकस्याः एव अन्ताराष्ट्रियायाः पादकन्दुकस्पर्धायाः आतिथेयत्वं निरूढम् । सा स्पर्धा का ?

३. राष्ट्रियपादकन्दुकस्पर्धायां विजेत्रे पारितोषिकत्वेन किं दीयते ? अनन्तरीययोः उभयोः कृते किञ्च दीयते ?





१. भारतेन एशियन्पादकन्दुकस्पर्धायां सुवर्णपदकं यदा प्राप्तं तदा भारतीयदलस्य नायकः कः आसीत् ?



४. अतिप्राचीना पादकन्दुकस्पर्धा का ?

५. डि.सि.एम्.पादकन्दुकस्पर्धा ऐदम्प्राथम्येन कदा आयोजिता आसीत् ?

(उत्तराणि ६६ तमे पृष्ठे)

# चित्रशीर्षिकास्पर्धा

**अधस्तनं चित्रद्वयं दृष्ट्वा परस्परसम्बन्धिना वाक्यद्वयेन चित्र-शीर्षिकां किं भवन्तः प्रेषयितुं शक्नुयुः ?**



TATA NARAYANAMURTHY



TATA NARAYANAMURTHY

समपत्रे लिखिता चित्रशीर्षिका अधस्तनसङ्केताय प्रेषणीया -

**चन्दमामा (संस्कृतम्) 'अक्षरम्' ८ उपमार्गः, गिरिनगरम्, बेङ्गलूरु - ५६००८५**

योग्या शीर्षिका एतन्मासस्य २५ तः पूर्वं प्रेषणीया । सर्वश्रेष्ठायै शीर्षिकायै रू.१००/- पुरस्काररूपेण दास्यन्ते । पुरस्कृता शीर्षिका मासद्वयानन्तरं प्रकाशयिष्यते ।

## अभिनन्दनानि

'मे'मासस्य शीर्षिकाप्रेषकः -

**पि. सुदर्शनन्**

३/४, सेतुभवस्वामिमार्गः

(सोलायप्पन्मार्गसमीपे)

**कुम्भकोणम् - ६१२ ००१**

(त.ना.)

## पुरस्कृता शीर्षिका





**क्रीडातः सिद्ध्यति स्वार्थः ।**
**दीपज्वालनं भवति परार्थम् ॥**



## अभिवर्ध्यतां ज्ञानशक्तिः - उत्तराणि

१. १९५१ तमे वर्षे - सैलेन् मन्नः । १९६२ तमे वर्षे चुन्नै गोस्वामी ।

२. नेहरू गोल्ड् कप् । १९८२ तमे वर्षे आरम्भः । कलकत्तानगरे तत् प्रवृत्तम् ।

३. प्रथमविजेत्रे - सन्तोषट्रोफी, अनन्तरीयाय - कमलागुप्तट्रोफी, तदनन्तरीयाय सम्पङ्गी-ट्रोफी च ।

४. डुराण्ड्कप् । १८८८ तमे वर्षे सर्. मोर्टिमर् डुराण्डवर्येण आरब्धा ।

५. १९४५ तमे वर्षे ।

Printed and Published by B. Viswanatha Reddi at B.N.K. Press Pvt. Ltd., Chennai - 26 on behalf of Chandamama India Limited, No. 82, Defence Officers Colony, Ekkatuthangal, Chennai - 600 097. Editor : B. Viswanatha Reddi (Viswam)

# DON'T SEARCH FOR ANSWERS!

- Who or what are Angelina, Santa Rosa and Wilson?
- If only he had appeared for the horse-riding test, he would have been selected for the Indian Civil Service. Who is being referred to here?
- Imagine A is 1, B-2, C-3, D-4..... X-24, Y-25, Z-26. How will you make a coded sentence in numbers to say "I love my school"?
- Can you make a chain of words with parts of the human body, from "head to foot"? There is no restriction on the number of words, but they must make a chain.
- Where will you go to see a sculpture of Maheshmurthi?
- Who are Kookoo's parents?

**All the answers are in the July 2006 issue of Junior Chandamama. It's a treasure-trove of knowledge.**

# Junior
## CHANDAMAMA

**THE ONE-STOP COMPLETE FUN AND ACTIVITY MAGAZINE**

**NOW AVAILABLE AT YOUR NEAREST NEWS STAND FOR RS.15 PER COPY**

**PAY ONLY RS.150 FOR ANNUAL SUBSCRIPTION AND SAVE RS.30**




For Further Details write to :
CHANDAMAMA INDIA LTD.,
82, Defence Officer's Colony,
Ekkatuthangal, Chennai - 600 097.

